श्रीमत्सुधीन्द्रतीर्थश्रीपादविरचिता

# अलङ्कारमञ्जरी




सम्पादकः

राजा श्री गुरुराजाचार्यः

श्रीपरिमलप्रकाशनम्: ८५



श्रीसुयमीन्द्रमाला: ६१

सर्वतन्त्रस्वतन्त्र-कविसार्वभौमशिखामणिभिः

श्रीमत्सुधीन्द्रतीर्थश्रीपादैः विरचिता

# अलङ्कारमञ्जरी

श्रीमत्सुमतीन्द्रतीर्थश्रीपादविरचितया

## मधुधाराख्यया व्याख्यया समलंकृता

सम्पादकः

श्रीराघवेन्द्रगुरुवंशभूषणम्—विद्याधिराजः
वेदान्तालङ्कारविद्वन्मणिः—सरस्वतीकण्ठाभरणम्

**राजा श्री गुरुराजाचार्यः**

तथा

**विद्याभूषणम् प्रो. साणूरु भीमभट्टः, एम्. ए.**

प्रकाशकाः

**श्रीपरिमलसंशोधनप्रकाशनमन्दिरम्**

नञ्जनगूडु—बेङ्गलूरु

ग्रन्थनाम : अलङ्कारमञ्जरी (सव्याख्या)

कविः : श्रीमत्सुधीन्द्रतीर्थश्रीपादाः

प्रकाशकाः : श्रीपरिमलसंशोधन-प्रकाशनमन्दिरम्, नञ्जनगूडु
शाखाः— "पद्मनाभः" संख्या— १०७४,
द्वितीय हन्तः, गिरिनगरम्
बेङ्गलूरू (कर्नाटकराज्यम्)

मुद्रणम् : प्रथममुद्रणम्— १९९२



मूल्यम् : पञ्चचत्वारिंशद्रूप्यकाणि (Rs. 45/-)

मुद्रक : श्री पि. आर्. एम्. देसायि
"परिमल एण्टर् प्रैसस्
तथा
श्री कौजलगी महोदयाः
बृन्दावन मुद्रकाः प्रकाशकाश्च
लाल् बाग् फोर्ट वीथी, बेङ्गलूरू—५६० ००४.

ग्रन्थप्राप्तिस्थलम्:

Raja S. Gururajacharya
"Padmanabha," No. 1074, Girinagar
2nd Phase, BANGALORE – 560 085

AND

SRI RAGHAVENDRASWAMY MUTT
BOOK STALL
MANTRALAYA – 518 345
Yemmiganur Taluk, Kurnool District
(A.P.)

# विषयसूची

# ग्रन्थसमर्पणम्

श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यमन्दबिरुदबृन्दविभूषित-सर्वतन्त्रस्वतन्त्र-
श्रीमद्वैष्णवसिध्दान्तस्थापनाचार्य- षड्दर्शनाचार्यवर्य
नास्तिकदर्शननिराकरणधुरन्धर-आस्तिकदर्शनमहाचार्य
श्रीमन्मध्वाचार्य समलंकृतश्रीमद्धंसनामकपरमात्मप्रवर्तित-श्रीमद्द्वैतसाम्राज्य
दिग्विजयविद्यासिंहासनाधीश्वराणां परमपूज्यानां

श्रीमद्विजयीन्द्रतीर्थ–श्रीमत्सुधीन्द्रतीर्थ-
श्रीमद्राघवेन्द्रतीर्थ गुरुसार्वभौम-
श्रीमत्सुमतीन्द्रतीर्थश्रीपादानां चरणकमलेषु

तथा

तत्पीठालंकृतानां परमपूज्यानां कीर्तिशेषाणां

श्रीमत्सुयमीन्द्रतीर्थसंयमीन्द्राणां

तद्वरकुमारकाणां परमपूज्यानां कीर्तिशेषाणां

श्रीमत्सुजयीन्द्रतीर्थगुरुपादानां
श्रीपादपद्मेषु

ग्रन्थममुं सभक्तिप्रणामपूर्वकं समर्पयाम:

श्रीमध्वनवमी
बेंगलूरु
१२—२—१९९२

इति गुरुपादकिंकराः
राजा श्री गुरुराजाचार्य:
राजा श्री लक्ष्मीनारायणाचार्य:

# धन्यवादसमर्पणम्

श्रीमच्छाष्टिकवंशालङ्काराणां, पेनगोण्डे धर्मश्री नरसम्मतनूभवानां मुदगल् श्री लक्ष्मीनरसप्प महोदयानां, तथा दोड्डबल्लापुर सोवेनहळ्ळी श्री सूरप्प-पुट्टम्मकुमारी धर्मश्री सेतूबायिनाम्न्याः सत्पुत्राः, श्रीमद्धरि-वायु-राघवेन्द्रगुरुसार्वभौमाना-मन्तरङ्गभक्ताः, षाष्टिकवंशभूषणाः, सत्कर्माचरणधुरीणाः, सदाचारसम्पन्नाः, तत्त्व-धर्मप्रसरणासक्ताः, विद्यापक्षपातिनः, धर्मकार्यसहायकाः श्री के. प्राणेशराय महोदयाः तथा तदनुजाश्च दिवंगतानां स्वीयमातापितृणां सेतूबायि श्रीलक्ष्मीनरसप्पमहोदयानां संस्मरणार्थं ग्रन्थस्यास्य मुद्रणाय धनप्रदानेन महान्तमुपकारमकुर्वन् ।

एतद्ग्रन्थप्रकाशनसाहाय्यकेभ्यः श्रीमद्भ्यः के. प्राणेशराय महोदयेभ्यः, तथा तदनुजेभ्यश्च आस्माकीन कृतज्ञतापूर्वक धन्यवादान् समर्प्य तेभ्यः श्रीमद्भ्यः ज्ञानभक्त्यायुरारोग्यसत्सन्तानाभिवृद्धिपूर्वकं सकल सन्मङ्गलान्यनुगृण्हन्त्विति श्रीहरिवायुगुरुसार्वभौमानभ्यर्थयामः ।

**राजा श्री गुरुराजाचार्यः**
**राजा श्री लक्ष्मीनारायणाचार्यः**

# प्रकाशकानां विज्ञप्तिः

मूकोऽपि यत्प्रसादेन मुकुन्दशयनायते ।
राजराजायते रिक्तो राघवेन्द्रं तमाश्रये ॥

अयि, तत्त्व—धर्म—संस्कृति—श्रीहरि—वायु—गुरुसार्वभौमोपासकाः सुधीमणयः, महदिदं प्रमोदस्थानं नः यदद्य, श्रीमत्सुधीन्द्रतीर्थ कविसार्वभौमविरचितामनन्यसाधारणीमलङ्कारमञ्जरी नाम्नीं कृतिंप्रबर्हां श्रीमत्सुमतीन्द्रतीर्थ श्रीचरणविरचितया "मधुधारा" भिधया व्याख्यया समलंकृतां मुद्राप्य विबुधवरेभ्य उपायनीकर्तुमिति ।

श्रीमन्मध्वमुनीन्द्रवेदान्तसाम्राज्य दिग्विजयविद्यासिंहासनाधीश्वराणां श्रीमद्राघवेन्द्रगुरुसार्वभौममठाधीश्वराणां परमपूज्यानां श्रीमत्सुयमीन्द्रतीर्थ श्रीपादानामाज्ञानुसारेण श्रीगुरुवराणां साम्राट्पोषकत्वे संस्थापित श्री परिमल संशोधन—प्रकाशनमन्दिरद्वारा, आर्थिक श्रीमत्वविधुरैरप्यस्माभिः श्रीमन्त्रालय मुनीन्द्राणां परमानुग्रहेण श्रीमत्सुयमीन्द्रतीर्थसंयमिभरूणां तथा तद्वरकुमाराणां श्रीमत्सुजयीन्द्रतीर्थश्रीचरणानां परमाशीर्वादबलेन च एतावता कालेनास्माभिः शताधिकप्रबन्धप्रवराः प्रकटीकृता इत्येतद्विदितचरमेव समेषां विदुषाम् ।

अलङ्कारमञ्जरीग्रन्थप्रकाशनसुसंदर्भेऽस्मिन् ग्रन्थस्यास्य संशोधन—मुद्रण—धनदान—मुद्रणादि कार्यनिर्वहणादिसाहाय्यमाचरितवद्भ्यः कृतज्ञतापूर्वक धन्यवादसमर्पणमवश्यमिति मन्यामहे ।

ग्रन्थस्यास्य संशोधकेभ्योऽस्मद्भ्रातृभ्यः 'वेदान्तशिरोमणिः, वैदिक-वाङ्मयविद्वन्मणिः, विद्यारत्नं, विद्याधिराजः" इत्यादि बिरुदभाग्भ्यः राजा श्री गुरुराजाचार्येभ्यः तथा न्यायवेदान्तालङ्कारशास्त्रविद्वद्भ्यः "विद्याविभूषणं " प्रो ॥ एस्. वि. भीमभट्ट एम्.ए. महोदयेभ्यश्च कृतज्ञतापूर्वकप्रणामान् समर्पयामः । एवमेव श्रीमत्सुमतीन्द्रतीर्थश्रीपादैः स्वीयव्याख्याने प्रदर्शितक्रममनुसृत्य अलङ्कारमञ्जर्या

निरूपित चित्रविचित्रबन्धेषु अष्टादशबन्धचित्रनिर्माणपूर्वकमुपकृतवद्भ्यः राजा श्री गुरुराजाचार्येभ्यः पुनरपि सन्त्वास्माकीना धन्यवादाः। एवमष्टादश बन्धानां मुद्रणयोग्यचित्रलेखनपूर्वकमुपकृतवद्भ्यः विख्यातकलाविद्भ्यः श्री. ए. वि. एम्. राज अरसु महोदयेभ्यश्च धन्यवादान् समर्पयामः।

किञ्च ग्रन्थममुं मन्त्रालयक्षेत्रस्थ श्री गुरुसार्वभौम संस्कृत विद्यापीठे पाठप्रवचनार्थं पठ्यपुस्तकत्वेन व्यवस्थाप्य महोपकारमाचरितवद्भ्यः विद्यापीटस्य कार्यनिर्वाहकेभ्यः अस्मत्सहोदरेभ्यः पं॥ श्री राजा कृष्णाचार्येभ्यः तथा न्यायवेदान्तादिशास्त्रविद्वद्भ्यः श्री राजा सुज्ञानेन्द्राचार्येभ्यः (राजा गिरियाचार्येभ्यः) आस्माकीनास्सन्तु परस्सहस्राः धन्यवादाः।

ग्रन्थस्यास्य मुद्रणाय धनसाहाय्यमाचरितवद्भ्यः श्रीहरिवायुगुरुसार्वभौम-भक्तेभ्यः श्री के. प्राणेशराय महोदयेभ्यः तत्सहोदरेभ्यश्च कृतज्ञतापूर्वकं धन्यवादान् समर्पयामः। एवं ग्रन्थमुद्रणेन साहाय्यमाचरितवद्भ्यः श्री पि. आर. एम्. देसायिमहोदयेभ्यः तथा श्री कौजलगी महाशयेभ्यश्च सन्त्वास्मीकीना धन्यवादाः।

अन्ते प्रबन्धप्रवरस्यास्य पाठ-प्रवचनेन सर्वेऽपि पण्डिताः श्रीमद्विजयीन्द्र-सुधीन्द्र-राघवेन्द्र-सुमतीन्द्रगुरुवरानुग्रहभागिनो भूयासुरित्याशास्य विरमामहे ॥

इति विबुधजनविधेयः,

**राजा श्री लक्ष्मीनारायणाचार्यः**
उप-सञ्चालकः
श्रीपरिमलविद्यामन्दिरम्
नञ्जनगूडु

प्रजोत्पत्ति संवत्सर
माघ शुक्ल श्रीमध्वनवमी
१२-२-१९९२
बेङ्गलूरु

श्रीः

# प्रस्तावना

(श्रीमन्तो राजा श्री गुरुराजाचार्याः बेङ्गलूर)

लक्ष्मीनारायणं वन्दे पूर्णप्रज्ञं जयाभिधम् ।
विजयीन्द्रसुधीन्द्रौ च राघवेन्द्रगुरूनपि ॥
राजाधिराजसंपूज्यं सर्वशास्त्रविशारदम् ।
सुमतीन्द्रयतीशानं वंदे मत्कुलशेखरम् ॥
मन्त्रालयमुनीन्द्रान्तेवासिनं कृतिकारिणम् ।
सुयमीन्द्रं वरगुरुं सुजयीन्द्रञ्च नौम्यहम् ॥
श्रीमत्सुधीन्द्रयतिभिः कृतालंकारमञ्जरीम् ।
सुमतीन्द्रयतीन्द्रीयव्याख्योपेतां प्रकाशये ॥

महदिदं प्रमोदस्थानं नः यदद्य श्रीमत्सुधीन्द्रयतीन्द्रविरचिता 'अलङ्कारमञ्जरी', श्रीमत्सुमतीन्द्रयतिपुङ्गवविराचितया "मधुधाराभिधया" व्याख्यया समलङ्कृता प्रकटीकृत्य विद्वद्वरेभ्य उपायनीक्रियत इति ।

अलङ्कारमञ्जर्याः प्रकटनमङ्गलसुसन्दर्भे विपश्चिदपश्चिमानां तत्र भवतां महतां सविधे यत्किञ्चिन्निवेदयितुमीहामहे ॥

अयि, महीमण्डलमण्डनायमानाः पण्डितपुण्डरीकाः, भगवद्भक्तिमञ्जरीपिञ्जरितहत्कुञ्जरञ्जितप्रभञ्जना निरञ्जनाः, नाज्ञातमिदमावेदनीयं यत्सर्वे जना आविपालगोपालं सुखमेवापेक्षन्ते न मनागपि दुःखसंस्पर्शम् । जननमरणयातायातजन्यदुःखपरम्परापारावारनिपातिता बम्भ्रम्यमाणचित्ताः विषमविषयानलेन दन्दह्यमानकाया इतस्ततस्सञ्चलन्तोऽपि अलंबुद्धिमनासाद्य विक्षुब्धमानसा अलब्धशरणाः कान्दिशीकास्सुरनरतिर्यगादि योनिषु संसरन्ति सर्वे जन्तवः । तानुद्दिधीर्षुः भगवान्नारायणोऽरविदूरः परमकारुणिकः ब्रह्मादिनिलम्पगणैरभ्यर्थितः श्रीवेदव्यासरूपेणावतीर्य ज्ञानमुपदिदेशाधिकारिभ्यः निराकृत-

मनोविकारेभ्यः निस्सारितकामेभ्यः। तदाज्ञया परममङ्गला श्रुतिदेवी मातृवदव्याजप्रेम्णा दुःखनिवृत्त्यै परमसुखावाप्त्यै च उपायमायोजयामास।

गौतममुनेश्शापात्कालवैक्लव्याच्च नष्टधर्मज्ञानान्साधूननुजिघृक्षुर्व्यासमुनिः श्रुत्यर्थनिर्णयाय ब्रह्मसूत्राणि चकार। तदुपबृम्हणाय भागवतभारतादि पुराणेतिहासजातं विरचय्य विज्ञानमणिमुद्द्योतयाम्बभूव। अज्ञानतिमिरतिरोहितं जगत्पतिं हृत्कुहरनिवासिनं रमारमणं चापरोक्षगोचरतामानिनाय। 'अम्बुवदग्रहणात्तु न तथा त्वं', 'अतोनन्तेन तथाहि लिङ्गं' इत्युक्तदिशा निर्व्याजस्नेहार्द्रहृदयेन अणोरणीयसः महतोमहीयसः अचिन्त्यमहिम्नः नारायणस्य साक्षात्कारमन्तरा अज्ञाननिर्वृत्तिरिष्टावाप्तिश्च न सिध्यतः। तदज्ञाननिबन्धना दुःखपरम्परापि न लीयते। 'पुंस्त्वादिवत्सतः', 'तद्गुणसारत्वात्तु', इत्युक्तप्रकारेण स्वरूपतः ज्ञानानन्दात्मकोऽपि जीवः अनादिकामकर्मपाशप्रतिबद्धगतिः दुःखसंस्पर्शमनिशमनुभवति। कथं नु खलु अनाद्यज्ञाननिगडनिकर्तनिनाऽऽत्मानं मोचयितुं पारयेद्विलुप्तचेष्टः प्राकृतोऽयं वराको जनः? । राजदर्शनान्निगडबन्ध-निवृत्तिमिव जगत्पतिं श्रीहरिमवलोक्यैव संसारनिगडविमोचनमुपकल्पयितुं प्रभवति जीवः महात्मनामुपदेशप्रकारैर्दर्शितपथः।

बहवो वादिनः बहोः कालात्रास्तिकदर्शनान्युद्भाव्य श्रीव्यासदेशिकोपदेश-मावृत्य संशयाज्ञानविपरीतज्ञानानि प्रसारयामासुः। तदर्थमनुक्रोशयुक्तः भगवान्नारायणः दुर्ज्ञानमपसार्य सच्छास्त्रनिर्माणेन साधुजनानुद्धर्तुं, अपगतदोषसंस्पर्शमसंशयं संशयच्छिदं भुवनजीवनं मुख्यप्राणमादिदेश। अज्ञज्ञानार्थिज्ञानयोग्य—भगवत्कृपापात्रभूत सल्लोककृपालुब्रह्मरुद्राद्यर्थित-भगवदाज्ञां शिरसि परमादरेणानर्घ्यशिरोरत्नवन्निधाय, तथाशेषदेवताप्रार्थनां हारवद् हृदि निधाय सर्वस्वकीयसज्जनानुग्रहेच्छया श्री पावनः पवमानः भारतभुवि श्रीमदानन्दतीर्थरूपेणावतीर्य श्रुतिस्मृतिपुराणेतिहासाद्यनन्तविद्याविवेचनेन प्रतिभातपरावरः मेघच्छन्नं रविमिव वायुः, दुश्शास्त्रतिरोहितप्रभावं नारायणं प्रदर्शयाम्बभूव साधुजननिकायाय। विज्ञान-शून्य-ब्रह्मैक्यवादाः शिवाद्यन्यदेवता-प्रवादाः पाशुपताद्यागमाः समुत्पद्य अनौपधं क्षराक्षरोत्तमत्वं नारायणस्य वितथमकुर्वन्। तान्सर्वानन्यथाकृत्य अवितथमतं सत्सिद्धान्तमुद्घोषयामास वायुदेवः।

श्रीहरिः सर्वोत्तमः सर्वगुणपरिपूर्णः। ब्रह्मादिदेवताः तारतम्येन व्यवस्थिताः तदाज्ञापरिपालने गृहीतावताराः धर्ममार्गमुपदिश्य साधुजनानुद्धरन्ति। सर्ववेदान्तप्रत्ययन्यायेन श्रीहर्याराधनमङ्गाश्रित सर्वदेवतोपासनञ्च यथायथं भक्त्याऽनुष्ठेयम्। अनासक्तियोगेन फलाभिसन्धि विना "अग्निहोत्रादि तु तत्कार्यायैव" इत्युक्तदिशा विहितकर्मण्यनुष्ठायापगतमलो ज्ञानचक्षुषा "पितरं पतिं गुरुतमं रमावल्लभं" हृदि साक्षात्कृत्य "भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यादि श्रुत्युक्तरीत्या अनिष्टमपहाय स्वरूपानन्दमनुभवति सात्त्विकचेतनः। अयमेव परमसिद्धान्तः प्रतिष्ठापितः श्रीव्यासानुमत्या वाय्ववतारभूतेन श्रीमन्मध्वाचार्येण। इममेव सिद्धान्तं श्रीमध्वशिष्यप्रशिष्याः जगति प्रचाययामासुरसकृदुपदेशेन–ग्रन्थनिर्माणेन सत्पथप्रवर्तितमार्गेण। तेषु श्रीपद्मनाभतीर्थ–जयतीर्थ–कवीन्द्र–राजेन्द्र–विबुधेन्द्र–श्रीपादराज–व्यासयोगिनः, तदनु तत्प्रीतिपात्रभूताः विजयीन्द्र–वादिराज–सुधीन्द्र–राघवेंद्र–सुमतीन्द्रतीर्थगुरुचरणाः अङ्गुलीनिर्देशनेन गणनामर्हन्ति ॥

## द्वैतपीठपरम्परा

श्रीहंसनामकपरमात्मप्रवर्तित ज्ञानपीठाध्यक्षैः श्रीमन्मध्वाचार्यैः प्रवर्तिते परमपावने द्वैतसिद्धान्तसाम्राज्यसिंहासने श्रीमदाचार्यप्रधानशिष्याः श्रीपद्मनाभ–नरहरि–माधव–अक्षोभ्यतीर्थमुनीवराः क्रमशः व्यराजन्त। तदनु द्वैतभाष्यटीकाकाराः श्रीजयतीर्थसंयमीन्द्राः सर्वज्ञसिंहासनमलंचक्रुः। तदनु तदन्तेवासिनः श्रीविद्याधिराजगुरुचरणाः द्वैतसाम्राज्यं सम्यक् परिपाल्य स्वनिर्याणकाले स्वशिष्यान् श्रीकवीन्द्र–श्रीराजेन्द्रतीर्थान् श्रीमदाचार्यविद्यासाम्राज्यपरिपालने नियोजयामासुः। षोडशतमे क्रिस्तशतके श्रीकवीन्द्रतीर्थपारम्पर्यां श्रीमत्सुरेन्द्रतीर्थश्रीपादाः, श्रीराजेन्द्रतीर्थपरम्परायां श्रीमद्व्यासराजतीर्थगुरुचरणाश्च श्रीमद्वैष्णवसिद्धान्तप्रसरणमनवरतमाचरन्तः श्रीमध्वविद्यासाम्राज्यसिंहासने विलेसुः ॥

## १. कृतिनायकपरिचयः

ततो गच्छतिकाले, सकलकलाभिज्ञाः श्रीव्यासराजगुरुसार्वभौमाः न केवलं वेदान्तसाम्राज्यं अपितु विजयनगरसाम्राज्यं, 'राजगुरु'पदञ्च निर्वहन्तो व्यलीलसन्।

कदाचिन्महामहिमशालिनः श्रीमध्वमहासंस्थानाधिपतयः मानसपूजाधुरन्धराः, सकलशास्त्रपारीणाः श्रीमूलरामार्चनोपार्जितविशिष्टवैभवाः श्रीसुरेन्द्रतीर्थश्रीचरणाः स्वपूर्वाश्रमबन्धून् सुहृन्मणीनिमान् श्रीव्यासराजयतिवरान् दिदृक्षवः विजयनगरं समीयुः। तदा स्वगुर्वाज्ञानुसारेण कृष्णदेवरायसार्वभौमः श्रीसुरेन्द्रमुनिपुङ्गवानसाधारणराजगौरवेण ससंभ्रममसेवत। श्रीसुरेन्द्रतीर्थाः श्रीव्यासतीर्थानां बहुष्वन्तेवासिषु प्रचुरप्रभावशालिनं वर्चोविशेषविभूषितवपुषं तदर्थमेव गुरोर्लब्धतुरीयाश्रमं श्रीविष्णुतीर्थनामानं विष्णुभक्तप्रवर्हं सन्ददृशुः। एतेषां श्रीसुरेन्द्रतीर्थानां विषये भूयःप्रदर्शितस्नेहातिशयाः श्रीव्यासराजव्रतीन्द्राः स्ववयस्यानमूल्येन केनचित्पारितोषकेण सन्तोषयितुमभिलषन्तः तदर्थमेव परिपालितं स्वप्रीतिपात्रममुं श्रीविष्णुतीर्थं तेषां करे समर्प्यामन्दमानन्दमविन्दन्।[१]

स्वीकृत्य च विष्णुतीर्थं श्रीसुरेन्द्रतीर्थाः तं दण्डपरिवर्तन—गुरूपदेश—मन्त्रमुद्राप्रदानपूर्वकं "श्रीविजयीन्द्रतीर्थ" इति नवेन नामधेयेन विभूष्य श्रीमदाचार्यपरम्परागतास्स्वकरार्च्यमानाः श्रीमूलराम—दिग्विजयराम—जयरामादिप्रतिमाः अप्रतिममहामन्त्रांश्चास्मै अनुगृह्य तं निजे श्रीमन्मध्ववेदान्तसाम्राज्यमहापीठेऽभ्यषिञ्चन्।[२]

एष एव यतीन्द्रोऽस्माकमेतद्वचोविचारगोचरः कृतिनायकः॥ श्रीविजयीन्द्रतीर्था इमे क्रिस्ताब्दीय १५३० तमवर्षमारभ्य १६१४ तम वर्षपर्यन्तं वेदान्तविद्यासाम्राज्यं सम्यक्परिपाल्य अनितरसाधारणकीर्तिविराजिताः लौकिकवैदिकविद्वन्मण्डलीलाल्यमाना विरेजिरे॥

---

१. विष्णुतीर्थकरं तस्य सुरेन्द्रस्य करे ददौ।
ददामि मत्सुतं तुभ्यं स्वीकुरुष्व यतिव्रत।
परिपालय हंसेमं (त्वं हंस) त्वदर्थं स्थापितं मया।
शिष्येष्वेषु तु सर्वेषु नानेन सदृशो मम॥
इत्युक्त्वा प्रददौ व्यासः सुरेन्द्राय सुतं मुदा। —श्रीविजयीन्द्रविजयः।

२. गृहीत्वा तं मुनिं हंसो विष्णुतीर्थं सुरेन्द्रकः।
सुरेन्द्रस्तस्य प्रददौ भिक्षोर्दण्डकमण्डलुम्।
दत्वा श्रीमूलरामार्चां विद्याराज्येऽभिषिच्य तम्।
मन्त्रं दत्वा स्ववंशस्य कर्तारं कृतवान्मुनिः।
अथासौ विष्णुतीर्थश्च विजयीन्द्र इति विश्रुतः॥ —श्रीविजयीन्द्रविजयः

# वादिदिग्विजयः

श्रीमद्विजयीन्द्रतीर्थश्रीपादानां कालः क्रि. श. १५१७ तमवत्सरमारभ्य १६१४ तमवत्सरपर्यन्तमिति बहूनामैतिहासिकविमर्शकानां विवादविवर्जितो निर्णयः। इमे १५३५ तमवर्षपर्यन्तं श्री व्यासराजतीर्थानां निकट एव कृतवसतयः समग्रशास्त्राणि चतुःषष्टिकलाश्च साकल्येन संजगृहुः।[३]

श्रीविजयीन्द्रपूज्यपादाः निजायुषः भूयांसं भागं निरवद्यविद्यैकसद्मायमाने कुम्भघोणाभिधाने नगरवर एवानैषुः। तत्र च स्वीयविद्यावैभवेन सर्वानपि वैदिकमतानुयायिनः पण्डितान्भूसुरांश्च विजित्य तान्सर्वान् शैवान् कुर्वन्तं शैवसंन्यासिनं (वीरशैवमठाधिपम्) पणबन्धपूर्वकं स्ववाग्वैखरीभरेण पराजित्य स्वायत्तीकृत तत् सर्वस्वाः व्यराजन्त॥[४]

विजयाभिवृद्धिदत्तचित्तैः श्रीविजयीन्द्रपूज्यपादैः तदा तदा विजयनगरादि विविधनगरीषु दिग्विजययात्राऽकारि। तत्रत्याः विपश्चिदपश्चिमाः प्रतिवादिनो निश्शेषमजेजीयन्त।[५]

---

३. षड्वारं व्यासराजेन्द्रमुखाच्छ्रुत्वा विशेषतः।
मध्वशास्त्रार्थसारं तु व्याचक्षाणं निजान्प्रति।
नवकृत्वो न्यायसुधां व्यासतीर्थपयोनिधेः।
उद्धृत्य पीतवंतं च नाकीन्द्रमिव सन्नुतम्॥ —विजयीन्द्रस्तोत्रम्

४. (क):— जित्वावादे वीरशैवगुरुं विस्तृततन्मठम्।
अपहृत्येह संवासं कृतवन्तं सतां हितम्॥ – स्तोत्रमहोदधिः पृ– २९२.
(ख):— Aravidu Dynasty of Vijayanagaram – p. ५५२.
(ग):— Epigraphica Indica – Vol. xiii. p. ३४६.
(घ):— Mysore Arch-Report-१९४४.p. १०३.Inscription No. २५.

५. चचार पृथिवीं सर्वां सिंहः क्षुद्रमृगेष्विव।
शास्त्रज्ञा मूकतां प्राप्ताः जयीन्द्रपुरतस्तदा॥
ब्राह्मणानजयत्सर्वांस्तर्कमीमांसवादकान्।
दैवज्ञान्भिषजो भट्टान्मायिनश्शास्त्रपारगान्।
ये ये जना वेद्यविद्यास्ते ते तेन विनिर्जिताः।
सर्वान्विजित्य सर्वत्र चचार पवनो यथा॥ —विजयीन्द्रविजयः।

ततश्च तत्रत्यैस्तदानीन्तनैरवनीश्वरैरनितरसुलभबहुमानवितरणपुरस्सरमेते आद्रियन्ते स्म ॥

एवं चतुःषष्टिकलाकलापकौशलेन वादविद्यावैभवेन सर्वतन्त्रस्वातन्त्र्येण च विलसतां श्रीविजयीन्द्रगुरुसार्वभौमानां कीर्तिरासेतुहिमालयं सर्वा आशा अवरुध्य विरेजे। तदा तदाकृष्टहृदयास्सहृदयाः बहवः शास्त्रितल्लजाः, कविपुङ्गवाः, शैवाद्वैतादिपरराद्धान्तविदग्धाः तद्दर्शनाय परीक्षणाय, पराजयाय चाहमहमिकया-ऽभ्यधावन्। तेषु प्रधानतया गण्यन्ते श्रीमदप्पय्य दीक्षितेन्द्र–ताताचार्य–भट्टोजीदीक्षिताः। भट्टोजीदीक्षिताः एतेषां व्याकरणशास्त्रनैपुण्यमुपवर्ण्यागण्य-मानन्दमभजन्। ताताचार्या एतेषां सुहृद एवावर्तन्त। अन्ये वेदान्तिनो व्रीडाधरितमुखाः पलायन्त। तदीयकवितामाधुरीधुरीणाः गीर्वाणगिरोऽवधार्य कविमणयः तदैव स्वाभिमानं तत्यजुः ॥

तर्कविदग्धास्तदीयवादवातोपसेवितेन तर्कतीव्रानलेन विशेषतो दग्धा एव। का कथान्येषां तदानीन्तनानां पण्डितंमन्यानाम्? असकृदधरीकृतचातुरीका अप्पय्यदीक्षिता "जयीन्द्रयोगिरूपतोवतीर्ण एष पूर्णधी"रिति विजयीन्द्रान्स्तुवन्तः एतेषां सुहृद एवावर्तन्त। तत्कृतानां द्वैतराद्धान्तविरोधिनां प्रबन्धानां खण्डनाय एतेऽपि चतुरधिकशतप्रबन्धप्रवरारीरचन्।[१]

किञ्च इमे न केवलं सर्वशास्त्रविशारदाः अपितु सङ्गीतशिल्पादि चतुःषष्टिकलास्वपि कुशलतरा व्यलसन्।[२]

एवं सकलकलाकोविदानखिलान्प्रत्यर्थिपण्डितान् विजित्य श्रीविजयीन्द्र-यतिशेखरा अनितरसाधारणीं कीर्तिं अलभन्त ॥

---

१. कः— दुर्वाद्यपय्यरचितग्रंथारण्यविनष्टये।
चतुस्संख्याधिकशतग्रन्थादीनां प्रचोदकम् ॥ –विजयीन्द्रस्तोत्रम्।
खः— विजयीन्द्रकृतैर्ग्रन्थैस्तद्ग्रन्थास्ते निराकृताः ॥ —विजयीन्द्रविजयः

२. कः— स्फुटविदितचतुःषष्टिविद्याविशेषः ॥ – गुरुगुणस्तवनम्।
खः— चतुःषष्टिकलाविद्याजुषे विद्वन्महोमुषे।
जयीन्द्रज्योतिषे कुर्यां वन्दनानि यशोजुषे ॥ —श्रीराघवेन्द्रविजयकाव्यम्।
गः— चतुःषष्टिकलाविद्यापूर्णोऽयमिति बन्दिभिः।
राजमार्गे घोष्यमाणं श्रीमध्वमतवर्धनम् ॥ —विजयीन्द्रस्तोत्रम्।

# राजसम्मानम्

श्रीमद्विजयीन्द्रयतीन्द्राणां सर्वतन्त्रस्वातन्त्र्यं, सिद्धान्तस्थापनविचक्षणतां, वादकौशलं, ग्रन्थप्रणयनचातुरीं ज्ञान–भक्ति–वैराग्य–तपो–महिमादिकं समवलोक्य प्रहृष्टान्तरङ्गास्तदानीन्तना नैके अवनीश्वरा विजयीन्द्रगुरुचरणानिमान् "रत्नाभिषेक-कनकाभिषेक-ग्राम-भू-धनकनकरत्नाभरणसमर्पणपूर्वकं सभक्तिश्रद्धं संसेव्य तदनुग्रहभाजनान्यभूवन् । तेष्विमे प्रधानतया गण्यन्ते ॥

१. कर्नाटकसाम्राज्याधीशः कृष्णादेवरायः स्वगुरुप्रियशिष्यान्विजयीन्द्रगुरुचरणान् क्रि. श. १५३० तमे वत्सरे ग्राम-भू-कनक-वस्त्राभरणादिभिः सभक्तिप्रकर्षमसेवत ।

२. विजयनगरीयसाम्राज्यधुरन्धरः "अळिय" रामराज महीपालः स्वगुरूनिमान् स्वर्णपीठे प्रतिष्ठाप्य अनितरसाधारण"रत्नाभिषेक"-गौरवेणासेवत[३] ॥

३. तञ्जापुरीय युवराजः अच्युतप्पनायकः सुभिक्षं सम्पद्भरितं "अच्युतप्पसमुद्रा"भिधं ग्राममेकं सरत्नाभरणं समर्प्यानन्दमभजत ।[४]

४. तञ्जापुरराज्यपालः शिवप्प(चव्वप्प)नायकः श्रीविजयीन्द्रगुरुपादेभ्यः सगौरवं ग्रामचतुष्टयप्रदानपूर्वकं संसेव्य आत्मानं कृतार्थं अमनुत ।[५]

---

३. (i):– विद्वद्वरोस्माद्विजयीन्द्रयोगी विद्यासुहृद्यास्वतुलप्रभावः ॥
रत्नाभिषेकं किल रामराजात्प्राप्याग्र्यलक्ष्मीनकृताग्रहारान् ॥–श्रीराघवेन्द्रविजयः ।
(ii):–Epigraphica India.
(iii):–Aravidu Dynasity of Vijayanagaram.
(iv):–Sources of Vijiayanagarm Hystory.

(4). (i):–Epigraphica India vol: xiii.
(ii):–Mysore Arch-Report-१९४७.

५. (i).:– Epigraphica India-vol: xii.
(ii):–Mysore Arch–Report-१९४४.inscription No २६.p ११३.

५. कर्नाटक चक्रेश्वरः "इम्मडी" श्रीरङ्गराजमहीपतिः क्रि. श. १५७६ तमे संवत्सरे "अरविलिमङ्गलाख्यं" ग्राममेकं सहिरण्योदकधारापूर्वकं समर्प्य गुरुवरानिमानसेवत ॥[६]

६. श्रीशालिवाहन शके १५३६ तमे आनन्दनाम संवत्सरे चैत्र शुक्ल ९ सौम्यवासरे (Date-९.३.१९१४) तञ्जापुरराज्यनिर्वाहकः चित्र चव्वप्प महीपालः भूम्यारामकनकाभरणादिप्रदानपुरस्सरं श्रीविजयीन्द्रतीर्थान् संसेवयामास ॥[७]

एवं मधुराधीश विश्वनाथनायक-उदयमार्ताण्डवर्म-रघुनाथभूपाल-सूरप्पनायक-वेंकटप्पनायक-देवराज- नञ्जराज-इम्मडी रामराजनायकप्रमुखा नैके महीपतयः विजयीन्द्रयतीश्वरान् परमादरभक्तिप्रकर्षमसेवन्त इत्यलं पल्लवितेन ॥

## ग्रन्थरचना

श्रीविजयीन्द्रगुरुपादा इमे वेदान्त-पातञ्जल-गौतमीय-जैमिनीयशास्त्रेषु, वेदवेदाङ्गेषु काव्य-नाटकालङ्कारादि साहित्यशास्त्रेषु च शताधिकप्रबन्ध-प्रवरान्विरचय्य आविपालगोपालैर्विविधदेशीयैर्विबुधवरेण्यैश्च संस्तूयमाना भारतभूमिं पवित्रीकुर्वन्तः षोडशतमे शतके भृशं शुशुभिरे ।

गुरुवराणाममीषां ग्रन्थप्रणयनचातुरीं श्रीराघवेन्द्रविजयकारा एवमुप-वर्णयन्तिः-

**"वाक्ये पदे पादविलोचनोक्तौ व्यासीयशास्त्रे च कृतान्प्रबन्धान् ।**
**आस्तां बुधाः श्रोतुमशेषमेषामाख्यास्समाख्याद्यदि पण्डितोऽसौ ॥"**

श्रीवादीन्द्रतीर्थश्रीपादास्तु स्वीय गुरुगुणस्तवनाख्ये काव्ये श्रीविजयीन्द्र-योगिनां वैविध्यपूर्णव्यक्तित्वमेवमुपवर्णयन्ति ।

---

६. (i):-Epigraphica India-vol: xii. १९४३-४४ p. ३५८.
(ii):-Aravidu Dynasity of Vijayanagaram. २८७.
(iii):-Inscription of madras precidency.
(iv):-Mysore Arch. Report-१९४४

७. क:- Mysore ,, ,,-१९४४.P. १२१. Inscription No. २७.
ख:- ,, ,, ,, ,, Inscription No २८.

"चातुर्यैकाकृतिर्यश्चतुरधिकशतग्रन्थरत्नप्रणेता
धूतारातिप्रबन्धः स्फुटविदितचतुःषष्टिविद्याविशेषः ।
सोऽयं नः श्रीसुरेन्द्रव्रतिपतितनयोऽद्वैतशैवासहिष्णुः
पुष्णातु श्रीजयीन्द्रस्त्रिभुवनविदितस्सर्वतन्त्रस्वतन्त्रः ॥"

श्रीसुमतीन्द्रतीर्थश्रीपादा विजयीन्द्रगुरुपादानेवं स्तुवन्ति—

"स्तौमि श्रीविजयीन्द्रसंयमिमणे प्रौढिं तवाढौकित-
प्रज्ञागन्धवहप्रभञ्जनभरोदर्कैकभास्वद्गुराम् ।
याति स्फूर्तिमिह व्रजत्यभिदधत्यानन्दमाच्छादय-
त्याशाचक्रमहो विभाति रुचिराकाराचिरं द्योतते ॥"

एतादृशमहिमाशालिभिः श्रीमद्विजयीन्द्रतीर्थपूज्यपादैर्विरचितेषु भारतीयवैदिकवाङ्मयभण्डारालङ्कारभूतेषु शताधिक प्रौढप्रबन्धेषु नैके लुप्ताः, अन्ये अन्धकारकोणके तत्र तत्र निलीनाः धूलीधूसरिताङ्गाः, कीटनाशितमातृकाः प्राप्तात्यन्तदुरवस्थाः एतावता कालेनाप्यप्रकाशिताः अलक्षितरूपा वर्तन्त इत्यहो दौर्भाग्यं भारतीयानाम् ! ।

परं श्रीमद्गुरुकारुण्यसरणिं प्रपन्नानामास्माकीनसौभाग्येन, श्रीमन्मध्वविद्यासिंहासनाधीश्वराणां श्रीमद्राघवेन्द्रगुरुसार्वभौममठाधीशानां कीर्तिशेषाणां परमपूज्यगुरुवराणां श्रीमत्सुयमीन्द्रतीर्थश्रीमच्चरणानां सकालिकोपदेशादेशाशीर्वादबलेनास्माभिः संगृहीतसहस्राधिकप्राचीनग्रन्थेषु श्रीविजयीन्द्रविरचिताः षष्ठ्यधिकग्रन्था उपलब्धाः ।*

अन्यत्र प्राचीनग्रन्थभाण्डागारेषु त्रिंषदधिकप्रबन्धा उपलभ्यन्ते । आहत्याद्य श्रीमद्विजयीन्द्रगुरुपादविरचिता नवत्यधिकग्रन्थप्रवरा उपलभ्यन्त इति निवेदयितुं मोमुदीत्यस्माकं चेतः ॥

* अस्माभिस्संग्रहीतेषु गन्थेषु "१.ब्रह्मसूत्रन्यायसंग्रहः, २.शैवसर्वस्वखण्डनम्, ३.भेदविद्याविलासः, ४.उपसंहारविजयः, ५.परतत्वप्रकाशिका" इति पञ्चप्रबन्धाः अस्माभिः पूर्वमेव प्रकटीकृताः। अधुना "तुरीयशिवखण्डनाभिधं" प्रबन्धं मुद्रणाय सज्जीकृतमिति सहर्षं निवेदयामः ॥

## अवतारपरिसमाप्तिः

श्रीविजयीन्द्रतीर्था इमे आसेतुहिमाचलं सुक्षेत्राण्यटित्वाऽन्ते कुम्भघोण-क्षेत्रमासाद्य तत्र सुप्रसिद्धं संस्कृतविद्यापीठं संस्थाप्य तत्र न्यायवेदान्तादि-सकलशास्त्रपाठप्रवचनप्रसारणादि स्वाश्रमोचितधर्मकर्माचरणपुरस्सरं महान्तं कालं नयन्तः स्ववासेन सह्यजातीरस्याप्यपारं पावित्र्यमासादयामासुः ।

एवं साधुजनसमूहसेविताः विज्ञगणवादतोषिताः भूमिपतिभिरादृताः शरणीकृतस्वचरणानां शिष्यभक्तजनानामनिष्टनिवृत्तिमभीष्टसमृद्धिञ्च सानुकम्प-मनुगृह्णन्तः सप्तनवति वर्षाणि भारतवर्षं पर्यभूषयन् । अन्ते पूर्वमेव स्वगुरुभ्यः श्रीसुरेन्द्रतीर्थपूज्यपादेभ्यस्स्वीकृतवराश्रमान्, स्वशिष्यान् षड्दर्शनाचार्यान् कविसार्वभौमान् श्रीमत्सुधीन्द्रतीर्थश्रीपादान् स्वीयवेदान्तसाम्राज्यसिंहासने प्रतिष्ठाप्य श्री शालिवाहन शके १५३६ तमे श्रीमदानन्द नाम संवत्सरे ज्येष्ठ कृष्ण त्रयोदश्यां स्थिरवासरे (क्रि. श. १६१४) कुम्भकोण नगर एव कवेरकन्यकाधन्यपयः पवित्रिते तटिनीतटे श्रीमन्नारायणध्यानपरायणाः स्वावतारपरिसमाप्तिमकुर्वन् इति निवेद्य कृतिनायकपरिचयमुपसंहरामः ॥

भक्तानां मानसाम्भोजभानवे कामधेनवे ।
नमतां कल्पतरवे जयीन्द्रगुरवे नमः ॥

भ्राम्यन्तो बहुधोपपत्युरुधुरोद्धाविस्वभावा बुधाः
ब्रूध्वं माध्वमतोपगम्भनपटुभोन्मेषो वचो विभ्रमैः ।
भव्यः कोऽपि गूरुर्भवेद्भुवि पुरोभावी नु भूतो भवन् ।
भो विद्योपपदोपशोभि विभवापत्यु प्रभूतोपमः ॥

## २. कविपरिचयः

सुधीन्द्रयोगिनं सेवे साधुसत्कृतसम्पदम् ।
सगद्यपद्यनिर्माणविद्यायाः प्रथमं पदम् ॥ —श्रीराघवेन्द्रविजयः ।

अखण्डेऽस्मिन्भरतखण्डे निखिलसत्कर्मानुष्ठान-सदाचार-सौशील्यादिनिकेतने चतुर्दशविद्यानां मातृस्थानभूते सङ्गीतसाहित्यकलाकौशल-

विलसिते उद्दण्डपण्डितप्रकाण्डपरिमण्डितेऽकलङ्ककीर्तिचन्द्रिकाविद्योतिते "स्वर्ण-भण्डारिण" इति प्रथिते तत्तादृग्जयतीर्थावतारपरिपूते षाष्टिकान्वये क्रिस्तशाके १५६१ तमे वर्षे अस्मत्कृतिकविः अवततार । नारायण इति सुगृहीतनामाऽयं कविः शौक्लपक्षीय सुधाकर इवाभिवृद्धः पितृबान्धवजनान्स्वीयबाललीलाकलापे-नानन्दयति स्म ।

कृतचूडाकर्मा काकपक्षधरः कलहंसकण्ठः निसर्गदृढपुष्टगरिष्ठगात्रोऽयं बालः क्रमेण गायत्रीमन्त्रोपदेशाधिकारी संवृत्तः । परम्परागतविधया गृह एव लिपिपरिचयं लघुकाव्यपठनं बाललोकमतिलीलासुलभं भारतभागवतरामायण-कथासंकथनकौशलञ्चाधीतवान् । बालकनारायणाचार्यः सुफलितपूर्वार्जितसुकृत-बलेन कमलसम्भवमनोहारिण्याः वीणापाणेः गीर्वाण्याः विशेषप्रसादसम्मिलित-कृपादृष्टिपीयूषधारयाभिषिक्तः बाल्य एव चित्रविचित्रगद्यपद्यात्मक प्रचुरतर-प्रबन्धनिर्माणविद्यायां निरतिशयवैदुष्यप्रतिभासमलंकृतः सकलकविविबुधसन्दोहं नैजकवितासुधारसास्वादनेन सन्तोषयति स्म ।

पूज्येन जनकेन गर्भाष्टमे हायने कृतोपनीतिः स्वाध्यायाध्यने निबद्धचित्तः त्रिकालसन्ध्याग्निकार्यनिकायादिकर्मकलापाननुतिष्ठन् साङ्गान् चतुर्वेदान् कण्ठपाठेन स्वायत्तीकृतवान्नारायणाचार्योऽतिसम्भ्रमेण । अचिरादेव हस्तसात्कृत-चतुर्वेदराशिः ब्राह्मणारण्यकोपनिषदादिवाङ्मयमनायासेन कण्ठेऽकरोद-कुण्ठधिषणो नारायणाचार्यः । समसमयमेव सपदि गान्धर्वकलां वीणावादनपटुताञ्च समासादितवान् । अहो अलौकिकी खलु रीतिरियमवधूतचरितानां लोकोत्तरप्रज्ञानां यदनधीतमपि प्रकटं प्रकाशते स्फुटमाविर्भवति च पूर्वजन्मसञ्चित-सुकृतफलेनातिवेलम् ॥

गुणतरङ्गिणी परिवृढनिर्व्यूढदृढमतिर्भारद्वाजगोत्रावतंसः स्वप्रतिभाविदूरित सन्तमसः नारायणाचार्यः स्वतातपादादेशानुसारेण सद्विद्याधिजिगांसया समागतकुम्भापुरः श्रीमत्परमहंसपरिव्राजकाचार्यवर्यान् स्वकुलगुरून् श्रीमध्ववेदान्तसाम्राज्यविद्यासिंहासनाधीश्वरान्सर्वतन्त्रस्वतन्त्रान् षड्दर्शनाचार्यान् श्रीमत्सुरेन्द्रतापससार्वभौमानाससाद । एवं स्वसन्निधिमुपागतं वर्चोविशेष-विभूषितवपुषं मनोमोहकरूपलावण्यविराजितं स्ववंशबन्धुकुमारं नारायणाचार्य-मवलोक्य हर्षोत्फुल्लमानसाः मानसपूजाधुरंधराः श्रीसुरेन्द्रतीर्थाः, तस्मै

सकलशास्त्रोपदेशाय निजशिष्यप्रबर्हान्विजयीन्द्रसंयमीन्द्रान्नियोजयामासुः। कुलगुरुप्रसादसमासादितशिष्यचर्यस्स नारायणाचार्यः परिचर्यापरिचितगुरुचित्तवृत्तिः श्रीविजयीन्द्रतीर्थचरणकमलसन्निधावुपविश्य शास्त्राध्ययनदत्तचित्तस्तेभ्यः शास्त्राण्यखिलान्यलभत ॥

श्रीविजयीन्द्रपूज्यपादा अपि विदितपूर्वशिष्यप्रतिभानिशातमतिवैभवा अतिमात्रमानन्दभरिताः अष्टवर्षपर्यन्तं नारायणाचार्येभ्यो सच्छास्त्रं कीरपाठं पाठयामासुः धन्यमात्मानं च मेनिरे चाभूतपूर्वसत्वशालिनः प्राज्ञतल्लजान्तेवासिनं सम्प्राप्य। नारायणाचार्याः न्यायमीमांसाव्याकरणादिशास्त्राणि ब्रह्मविद्याधिगमसहकारीणि बहुवारमावर्तनेन मतिद्वितीयानि ग्रीवाभूषणानि प्रकल्प्य विजयीन्द्रगुरुभरूणां निरवग्रहानुग्रहभाजनान्यभूवन्। विजयीन्द्रसंयमीन्द्रा अपि पुत्रनिर्विशेषप्रेम्णा वेदान्तरहस्यसमस्याराशीन् तद्धृदयकुहरगुहायां सुक्षेमं निक्षिप्याऽविक्षिप्तमनःक्षेपाश्चिन्तासंक्षेपमातेनिरे ॥

एवं गच्छतिकाले एकदा भगवान् श्री मूलरघुपतिवेदव्यासः सुरेन्द्रतीर्थानां स्वप्ने "मत्प्रीतिपात्रं नारायणसुधीमणिः परमहंसाश्रमप्रदानपूर्वकं श्रीमध्वविद्याराज्येऽभिषेक्तव्य" इत्यादिदेश। परमानन्दनिर्भराः श्रीसुरेन्द्रयतिपुङ्गवाः विषयममुं निवेद्य प्रियशिष्येभ्यो विजयीन्द्रतीर्थेभ्यः तैस्साकं कृत्वा विचारविनिमयं भगवदाज्ञानुपालनमवश्यं सफलं कर्तव्यमिति निश्चित्य श्री शालिवाहनशके १४९७ तमे (क्रि.श. १५७५) युवसंवत्सरे चैत्र शुक्ल त्रयोदशी शुभदिने सकल ग्रहबलसमन्विते मङ्गलमुहूर्ते, निखिललौकिकवैदिकपौरजानपदसुशोभितायां विद्वन्महासभायां, श्रीसुरेन्द्रगुरुपुङ्गवाः सकलशास्त्रकोविदान्स्ववंशबन्धून्नारायणाचार्यान् महासंस्थानसम्प्रदायमनुसृत्य परमहंसाश्रमप्रदानपूर्वकं श्रीविजयीन्द्रतीर्थानामुत्तराधिकारिण इत्युद्घोष्य नूतनजगद्गुरूनिमान् श्रीविजयीन्द्रयतिकराम्बुजे समर्पयामासुः।[१]

श्रीविजयीन्द्रगुरुवरा अपि ससम्भ्रमं सानन्दं स्वगुरुभिरनुगृहीततुर्याश्रमेभ्यः स्वशिष्येभ्यो मन्त्रमुद्राधारण-गुरूपदेश–प्रणवाद्यष्टमन्त्र–चतुःषष्टिकलाश्चोपदिश्य

१. सुरेन्द्रस्सम्प्रदायाप्तन्यासविच्छेदभीरुकः।
सुधीन्द्रं न्यासयित्वा तं विजयीन्द्रकरे ददौ ॥ —श्रीमठार्चागतिक्रमः।

तान् वेदान्तराज्यविद्यासिंहासने प्रतिष्ठाप्य **"श्रीमत्सुधीन्द्रतीर्थश्रीपादा"** इति नामकरणपूर्वकं नवरत्नैरभिषिच्यामन्दमानन्दमविन्दन् ॥

नूतनजगद्गुरवः श्रीसुधीन्द्रतीर्थश्रीपादाः स्वगुर्वनुज्ञया केभ्यश्चिच्छात्रेभ्यः चतुश्शास्त्रेषु उद्ग्रन्थपाठप्रवचनं कुर्वन्तः शास्त्र-विमर्श-वाक्यार्थविचाराचारैः प्रवचनाचार्यपदे नितरां शुशुभिरे । अहो नु गुरुगौरवं स्वशिष्येषु गुणग्रहणप्रवणता निरपवादा च विजयीन्द्रपूज्यपादानाम् ।

कुम्भघोणनगरीयसंस्कृतविद्यापीठमहाध्यक्षाः श्रीविजयीन्द्रगुरुचरणाः स्वशिष्यशिरोमणीनामेतेषां श्रीसुधीन्द्रतीर्थानां तर्क-वेदान्तपारदृश्वनां व्याकरणे महाभाष्ये मीमांसाशास्त्रेष्वप्यनतिलंघ्यं पाण्डित्यं प्रभुत्वञ्च समवलोक्य षट्शास्त्रेष्वमीषां निर्गलां प्रतिभाञ्चावलोक्य विस्मयानन्दतुन्दिलहृदः स्वशिष्या इमे श्रीमत्पावनपवमानसिद्धान्तस्थापनसंरक्षणप्रसरणादिना श्रीमध्वसाम्राज्यस्य गौरवाभिवृद्धिमातन्वन्तोऽसाधारणीं कीर्तिं लोकमान्यताञ्च भृशं लभन्त इति मनसि निश्चित्य आनन्दबाष्पसन्दिग्धनयना महाविद्वत्सभायां श्रीमत्सुधीन्द्रयतिपुङ्गवान् दृढं परिष्वज्य **"षड्दर्शनाचार्य"** इति सर्वोच्चप्रशस्तिप्रदानेनान्वगृह्णन् । तदा परिषद्भूषायामाणाः विद्वद्वरेण्यास्सभ्याश्च श्रीसुधीन्द्रयतिवरानभ्यनन्दन् करतलास्फालनेन मुखरितदिगन्तरालेन ॥

श्रीविजयीन्द्रतीर्थाः तत्तन्महाविद्वत्सभासु विद्यामदोत्कटविशंकटचेष्टान् प्राज्ञंमन्यान्वावदूकान् प्रतिपक्षिणः पण्डितान् लीलामात्रेण निस्सारितसत्वान् दर्शं दर्शं स्वयं श्रीसुधीन्द्रतीर्थानां प्रतिभावैखरीं, वादकथा सञ्चालनप्रखरपरिपाटीं, परमाप्तपथेन प्रतिवादिवाददोषाविष्करणकौशलीं परीक्ष्य ते शास्त्रनिधयः दुश्शास्त्रसन्तमसदिनमणयः प्राक्तनपुण्यपरिपाकेनाऽस्माकं श्रीमूलरघूद्वहेण रमारमणेन हरिणा कृपार्णवेनासुरासुहारिणाऽभ्यर्णमुपायनीकृता इति मनसि नितान्तमसम्भिन्नमानन्दमन्वभवन् ॥

## ग्रन्थरचना

श्रीसुधीन्द्रधीमणय इमे गुर्वनुग्रहबलेन अचिरादेव जगन्मान्य 'आपस्तंब शुल्बसूत्रप्रदीप – समासशक्तिनिर्णय – ब्रह्मसूत्राधिकरणरत्नमाला – तर्कताण्डव-व्याख्या सद्युक्तिरत्नाकर – अमृताहरण – अलङ्कारमञ्जरी – साहित्यसाम्राज्य –

सुभद्रापरिणय नाटक"प्रमुख प्रौढप्रबन्धनिर्माणेन निखिलविद्वन्मण्डलीलाल्यमाना राजाधिराजसंसेव्यमानाः शिष्यभक्तधार्मिकवृन्दवन्द्यमाना दिगन्तविश्रान्तयशसा शुशुभिरे ॥

श्रीसुधीन्द्रतीर्था इमे स्वगुरव इव निखिलशास्त्रेष्वपि कृतिनिर्माणचातुर्येण वैदिकवाङ्मयभण्डारमेधयामासुः । एतेषां "१. समासशक्तिनिर्णयः, २. आपस्तम्ब शुल्बसूत्रप्रदीपः, ३. ब्रह्मसूत्राधिकरणरत्नमाला, ४. तर्कताण्डवव्याख्या सद्युक्तिरत्नाकरः, ५. प्रणवदर्पणखण्डन"मित्यादि ग्रन्थरत्नानि बिबुधप्रपञ्चेऽतिशयमान्यतामलभन्त । तर्कताण्डवव्याख्यानं तु वीणापाण्याः नर्तनरङ्गस्थलमभवत्[१] ६. अमीषां भागवतव्याख्यानं तावद्भारतीदेव्याः किरीटाग्रविलसन्मुक्तामणिरिव विरराज ।[२]

सुधीन्द्रयतिपुङ्गवा इमे साहित्यशास्त्रे दृश्यश्रव्यकाव्याख्यभागद्वयेऽपि जगन्मान्यप्रबन्धप्रवरानरीरचन् ।[३] एवं कविपुङ्गवा गुरुपादा इमे स्वीयकाव्यनाटकालङ्कारादिकृतिनिर्माणचातुर्येण साहित्यगन्धविधुराः खलु माध्वाः इत्यपवादं दूरतो निस्सारयामासुः ।

श्रीसुधीन्द्रयतीन्द्रविरचितानि १. "अमृताहरणकाव्यम्, २. श्रीव्यासराजाभ्युदयः, ३. विजयीन्द्रयशोभूषणम्, ४. वैराग्यतरङ्गः" इत्यादि श्रेष्ठकाव्यानि; ५. "दयालुशतकम्, ६. शतापराधस्तोत्र"मित्यादि स्तोत्राणि, ७. "सुभद्रापरिणयनाटकम्, ८. सुभद्राधनञ्जयः" इत्यादि नाटकानि; ९. "अलङ्कारमञ्जरी, १०. साहित्यसाम्राज्यम्"[४] इत्याद्यनितरसाधारणानि कृतिरत्नानि सुरसरस्वत्याः विहारोद्यानतामभजन् ॥

---

१. "व्याख्याव्याजात्तर्कनृत्तस्य मह्यं रङ्गस्थानं निर्ममे श्रीसुधीन्द्रः ॥"

—राघवेन्द्रविजयः

२. "व्यासेनोक्तां व्याकरोद्यद्द्वितीयस्कंधं प्रायो दुर्गमेकादशञ्च ।
_______ मौलेरग्रे मौक्तिकं तन्ममासीत् ॥"

३. "सुधीन्द्रयेगिनं सेवे साधुसत्कृतसम्पदम् ।
सगद्यपद्यनिर्माणविद्यायाः प्रथमं पदम् ॥"

४. "____ नर्मारामं नाटकं चित्रगद्यम् ।" —श्रीराघवेन्द्रविजयः

तञ्जापुरीय राजास्थानमहाकविः कृष्णयज्वा तञ्जापुराधीश्वरं रघुनाथनायकं नायकत्वेनोपवर्ण्य "रघुनाथभूपालीय"मित्येकमलङ्कारग्रन्थमरीरचत्। तद्ग्रन्थमामूलाग्रं विमृश्य सभासदः पण्डिताश्च "यदि श्रीसुधीन्द्रश्रीमच्चरणाः ग्रन्थस्यास्य व्याख्यानं कुर्वन्ति तदा ग्रन्थोऽयं समग्रे विद्वत्प्रपञ्चे निरतिशयविख्यातिमाप्नोती"त्यब्रुवन्। रघुनाथनायकः सभासदामाशयमवगम्य स्वविद्यागुरूनिमान् सुधीन्द्रव्रतीन्द्रानासाद्य "कृष्णयज्वकविविरचितग्रन्थस्य व्याख्याकरणेन मामनुगृह्णन्त्वि"त्यभ्यर्थयामास।[६] शिष्यवत्सलाः करुणार्णवा इमे श्रीपादाः स्वगुरुपादादेशानुसारेण रघुनाथभूपालीयग्रन्थं "साहित्यसाम्राज्यमि"ति स्वीयप्रौढव्याख्यानेन विद्वत्प्रपञ्चे प्रकाशयाञ्चक्रिरे। गुरुवराणां व्याख्यानचातुरीं श्रावं श्रावं अमन्दानन्दतुन्दिला विद्वन्मणय इमानत्यन्तमस्तुवत।

एवं गद्यपद्यात्मकप्रबन्धनिर्माणविद्यायामग्रगण्याः कविसार्वभौमशिखामणय इमे श्रीसुधीन्द्रयतिसार्वभौमाः साहित्यदेवीं भारतीयकाव्यमण्टपे नर्तयांचक्रुः।

गुरुवराणां समकालिकाः सुधीमणयः कविपुङ्गवा अमीषां सार्वकालीन विद्यावैभव—ग्रन्थरचनाकौशलेन भृशं प्रभाविताः गुरुगुणगणानुपवर्ण्येमानधिकृत्य काव्यालङ्कारादिप्रबन्धान् विरचयामासुः। कश्चन महाकविः सुधीन्द्रतापसशेखरानिमान्नायकत्वेनेनोपर्णयन् "अलङ्कारनिकषा"भिधमलङ्कारशास्त्रग्रन्थमरचयत्। क्रैस्तषोडषशतककालीनोऽयं महाकविः (तञ्जापुरीय राजास्थानमहाकविः कृष्णयज्वा एव कृतेरस्याः निर्मातेति विमर्शकपण्डिता मन्यन्ते) स्वकृतेः प्रारम्भे—

**"श्रीमत्सुधीन्द्रसंयमिपुङ्गव गुणकथनगरिम्णा।**
**ललितानुदाहरामि श्लोकान्कृतिलोकविरचितश्लाघान्॥"**

इति प्रतिज्ञां कुर्वन्ग्रन्थेऽस्मिन् सुधीन्द्रगुरूणां गुणगणान्निपुणतरमभिवर्णयति। "समाधि"निरूपणावसरे "अथ प्रथमसमुच्चयप्रतिद्वन्द्वतया

---

६. तेन श्रीरघुनाथभूमिपतिना सम्प्रार्थितस्तन्मुदे।
तत्रादृग्विजयीन्द्रसंयमिमणेः षड्दर्शिनीदर्शिनः।
शिष्यो व्याकुरुते सुधीन्द्रयतिराट् कृष्णाध्वरीन्द्रोदितं
ग्रन्थं तद्गुणबन्धुरं रसगुणालङ्कारझंकारितम्॥ —साहित्यसाम्राज्यम्।

समाधिर्लक्ष्यते_" "सौकर्यं यदि कार्यस्य कारणान्तरसन्निधेः। कार्यस्य सम्यगाधित्सा ससमाधिरितीर्यति ॥" यथैकस्मिन्कारणे कार्यसाधनाय प्रवृत्ते सति काकतालीयतया यदन्यदपि कारणमागत्य तत्कार्यं सुकरं करोति स समाधिरिति व्यपर्दिश्यते ॥ यथा:—

"धीर श्रीमत्सुधीन्द्रव्रतिवरधनदः किन्नरीगीतिषुत्व-
द्दानक्रीडापदानं सदसि निशमयन्नन्तरीष्वाकुलोऽपि।
मूर्ध्नः कम्पैर्मुदैव प्रमदमभिनयन्प्रीयते सोऽयमक्ष्णोः
तत्कालोत्तंसि मौलि प्रगविरलरजः पातजैरश्रुपूरैः ॥"

इति (वर्णयति) ॥ कविरयं स्वग्रन्थे श्रीसुधीन्द्रपूज्यपादानां सर्वतन्त्रस्वातन्त्र्यं अप्रतिहतप्रतिभाञ्च एवं स्तौति—

"निर्हैत्यर्हन्निरुक्तिं हरति परिणतिं बुद्धधीपद्धतीनां
काणादोक्तिप्रनाडीं क्षपयति पदवीमाक्षिपत्याक्षपादीन्।
धातुर्नीतिं धुनीते ग्लपयति कपिलालापलीलाकलापं
धीरस्त्रैय्यन्ततत्त्वस्थितिमुपचिनुते श्रीसुधीन्द्रो यतीन्द्रः ॥"

अन्यत्र कविरयं सुधीन्द्रयतिसार्वभौमसदृशास्त्रिषु लोकेषु न कोऽपि वर्तत इति स्ववाक्कुसुमैर्गुरुवरानेवमभिवर्षति—

"श्रीमत्सुधीन्द्रव्रतिसार्वभौम
गाम्भीर्य[६] मौदार्यमुखैर्गुणौघैः।
तुल्यस्त्वया न त्रिषु विष्टपेषु
निशाम्यते कोऽपि निशम्यते वा" ॥ इति ॥

एवमेव तदानीन्तनाः कविविबुधमणय सुधीन्द्रयतीन्द्रानिमानधिकृत्य प्रबन्धप्रवरान्विरचय्य गुरुभरूणां अनितरसाधारणवहुमुखव्यक्तित्वमहिमादिक-मुद्योत्य श्रीमत्सुधीन्द्रतीर्थानामनुग्रहभाजनान्यभूवन्नित्यलं पल्लवितेन ॥

---

६. गांभीर्यमा – गांभीर्यलक्ष्मीः

# जैत्रयात्रा—राजसम्मानम्

श्रीमद्विजयीन्द्रश्रीपादानामाज्ञामनुसृत्य श्रीसुधीन्द्रतीर्थाः जैत्रयात्राव्रतं स्वीकृत्य सकलबिरुदावली—विद्वज्जनसमन्विताः कुम्भघोणनगरात्प्रस्थिताः, दक्षिणोत्तरभारतदिग्विजयमाकलयन्तः सर्वत्र प्रत्यहं स्नान-जप-तपः-पाठ-प्रवचन मूलरघुपतिवेदव्यासदेवपूजाराधन-परवादिनिग्रह द्वैतसिद्धान्तप्रतिष्ठापन शिष्य-भक्तजनोद्धरण-लोककल्याणादिस्वकर्तव्यं कुर्वन्तस्सर्वसज्जनैस्सम्पूजिता अमलां कीर्तिमलभन्त ॥

तापससार्वभौमानाममीषां श्रीमत्सुधीन्द्रतीर्थश्रीपादानां पाण्डित्यप्रतिभा-विद्योतितचातुर्य-सुमधुरवचोगुम्भितप्रवचन—तेजोविभूषित व्यक्तित्वादिभिराकृष्टाः नैके राजा इमान्निरतिशयभक्तिगौरवेण संसिषेविरे । तेषु ग्वालियरराज्याधिपः, विजयपुरसुल्तानः, कर्नाटकचक्रेश्वराः, तञ्जापुरमधुराधिपतयः प्रथमतया गण्यन्ते ॥

१. उत्तरभारते ग्वालियरराज्याधीश्वरः सिन्धेमहोदयः श्रीसुधीन्द्रयतिवर्यानतिभक्त्या राजसभायां राजसिंहासनं स्वयमेवारोप्य **"दिग्विजयसिंहासनाधीश्वर"** इत्यपूर्वप्रशस्तिप्रदानपूर्वकं गुरुवरान्नवरत्नैरभिषिच्य, सुवर्णसिंहासन-श्वेतछत्र—चामर—कनकाभरणाद्यर्पणेन सम्मानयामास ॥[७]

२. विजयपुराधीश्वरः आलि आदिल् शाह नामकः यवनसुल्तानः स्वराज्यपीडकं द्वादशवर्षीयदुर्भिक्षं निजमहिम्ना परिहृत्य महान्तमुपकारमाचरितवद्भ्यः श्रीसुधीन्द्रगुरुभ्यः श्वेतछत्र—चामरादि बिरुदावलीसमलङ्कृतं **"जगद्गुरुः"** इत्यनन्यसाधारणीं महाप्रशस्तिं, "आनेहोसूरु"नामकग्रामं, कनकाभरणपीताम्बराणि च समर्प्य सानन्दमसेवत ।[८]

३. कर्नाटकसाम्राज्याधीशः "इम्मडि" श्रीरंगराजमहाप्रभुः (गुरुवराणां) सुधीन्द्रतीर्थानां काव्य—नाटकालङ्काराद्यनुपमकृतिकरणधुरीणतां समवलोक्य

---

७. श्रीराघवेन्द्रस्वामिनां मठे विद्यमानं ग्वालियरराज्यमुद्राङ्कित प्रशस्तिपत्रम्
i. राघवेन्द्रमठीय "षहा अमल्".

८. श्रीराघवेन्द्रस्वामिनां मठीय "शाह – अमल्" ।

प्रहृष्टमानसः पम्पाक्षेत्रे श्रीविरूपाक्षसन्निधौ शालिवाहन शके १४९७ तमे युवसंवत्सरे माघकृष्ण त्रयोदश्यां स्थिरवासरे (२८–१–१५७६) सुधीन्द्रगुरुपुङ्गवेभ्यः "बच्चनहाळु, ख्याड, यडवाड, चञ्चिल, अरळीहळ्ळि" नामक ग्रामपञ्चकमभ्यर्णमुपायनीकृत्य गुरुशेखरानिमान् परजनदुर्लभेन **"रत्नाभिषेकेण"** सभक्तिश्रद्धं सम्भावयाञ्चक्रे ॥[९]

४. कर्नाटक सार्वभौमः वीरवेङ्कटपतिमहारायः स्वीयराजास्थान-पण्डितान्सर्वान्विजित्य विलसद्भ्यः श्रीसुधीन्द्रयतिवरेभ्यः विजयसूचकानि 'विजयशंख–श्वेतछत्र–चामरान्दोलिकादी'नि प्रदाय निरतिशयभक्तिगौरवेण सुधीन्द्रयोगीन्द्रान् सम्मानयामास ।[१०] किञ्च गुणपक्षपाती स वेङ्कटपतिसार्वभौमः परमहंसकुलशेखराणां श्रीमत्सुधीन्द्रकवीन्द्राणां प्रौढप्रबन्धप्रणयनप्रावीण्य-

९. Mysore Arch. Report – १९४४ .p. १३९. Note–२२.

१०. "पवित्रितामेषधरां वितन्वन् सञ्चारतो दिग्विजयापदेशात् ।
श्रीवेङ्कटक्ष्मापरिणीसमक्षे वादेन विद्वेषिबुधान्विगिग्ये ॥
समेत्य शंखादिमजैत्रचिह्नं नृपादमुष्मादपि सह्यजायाः । – श्रीराघवेन्द्रविजयः

१०–i. One of the philosophers favoured by Venkatapati Raja was the Madhva Teacher Sudheendra(Tirtha). He was travelled all over the country refuting the teachings of other religious sects. He defeated all of his opponents at the court of Venkata ............
– Aravidu Dynasty of Vijayanagaram p. ५१८

ii. ......... Vijayindra was succeeded by sudheendra. He was a great scholor and travelled all over country controverting the teachings to their religions. He conq}red all his opponents at court of the Emperor Venkatapatiraya and was presented by sovereign with the Conch and other emblems of victory.
– Sources of Vijayanagaram History
– Aravidu Dynasty of Vijayanagaram
–by Rev. Henery Heras.

विलोकनेन हृष्टान्तःकरणः व्रतिशेखरानिमानारोप्य रत्नपीठं **रत्नाभिषेक-कनकाभिषेकादिकं** विधाय वारं वारं सम्पूजयामास ॥[११]

५. श्रीसुधीन्द्रगुरुचरणानां शिष्याग्रेसरः तञ्जापुरराज्याधीशः रघुनाथभूपालः स्वगुरुपादानिमान् सुवर्णभद्रासनेऽलंकृत्य **"कनकाभिषेक"** ग्रामदानादिना सम्पूज्य स्वाऽऽत्मानं धन्यं मेने ॥[१२]

एवमेव दक्षिणोत्तरभारतीयास्तदानीन्तना नैके अवनीश्वराः सुधीन्द्रपूज्यपादान्वैविध्यपूर्णसम्मानादिना सम्पूजयामासुः। किं बहुना? कर्नाटकराज्यसंशोभिते श्रवणबेळगोळे विख्यातजैनमठाधीश्वराः श्रीचारुकेशी-स्वामिनः सुधीन्द्रतीर्थानां सर्वशास्त्रप्रावीण्यादिकमवलोक्य मुग्धाः इमान् प्रमोदभरेण सादरं सम्मानयन् ॥

एतादृशमहामहिमाशालिनः श्रीसुधीन्द्रसंयमीन्द्राः क्रि. श. १५६१ तमवर्षादारभ्य १६२३ तम वर्षपर्यन्तं चित्रविचित्रचारित्र्यसमलंकृता-स्सर्वसज्जनैराराध्यमाना भारतवर्षं संभूषयामासुः।

अन्ते स्वशिष्यशेखरान् श्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमान् श्रीमन्मध्ववेदान्त-साम्राज्यसिंहासने प्रतिष्ठाप्य वत्सरत्रयपर्यन्तं तैरतिभक्त्या संसेवितास्सन्तः कोलबाला(तुङ्गभद्रा)तटिनीतटे हंपीक्षेत्रे स्वपूर्वाचार्यबृन्दावननिकटे श्रीशालिवाहन शके १५४५ तमे रुधिरोद्गारि संवत्सर फाल्गुन कृष्ण द्वितीया शुभदिने स्वावतारपरिसमाप्तिमातन्वानाः प्राकृतशरीरं परित्यज्य निखिलगुणनिकायं परात्परं श्रीलक्ष्मीसहायं श्रीमन्नारायणं हृत्कमले प्रतिष्ठाप्य तद्ध्यानपरायणा अभूवन्। तेऽद्यापि स्ववृन्दावने कीर्तिशरीरेण विद्योतन्त इति शम् ॥

---

११. "व्याधूतावद्यहृद्यामितकृतिरचना चारुचातुर्यहृष्य
त्कर्नाटक्षोणिपालप्रतिपदरचितानेकरत्नाभिषेकः।
पत्रीशारूढलक्ष्मीपतिपदनलिनोदग्ररोलम्बलीलो
विख्यातश्रीसुधीन्द्रव्रतिपतिरतुलं भद्रमुन्निद्रयेत्रः ॥" —श्रीगुरुगुणस्तवनम्।

१२ – a) अतुलविविधविद्वन्मण्डलीलाल्यमानः प्रभुमणिरघुनाथप्रौढभूपालकेन।
निहितनिखिलविद्वन्मौलिपादस्सुधीन्द्रः परजनदुरवापं प्राप हेमाभिषेकम् ॥
— श्रीराघवेन्द्रविजयः

b) – Epigraphica Indica.

c) – He was lived at the town Kumbhakonam and was honoured by Raghunatha of Tanjore with ceremany of bathing in gold (कनकाभिषेकम्). — Aravidu dynasty of Vijayanagaram.

"कुशाग्रमतये भानुद्युतये वादिभीतये ।
आराधितश्रीपतये सुधीन्द्रयतये नमः ॥"—श्रीमद्राघवेन्द्रतीर्थगुरुपादाः

इदानीं तद्गुणगणानाशुकवितया उपवर्ण्य विरमामः—

प्रोद्यद्विद्यासमुद्रामितमहिमबुधानीकसंसेव्यमान !
षट्शास्त्रेषु प्रबन्धप्रणयननिपुणानन्यसत्कीर्तिवित्त ! ।
दुर्वादीन्द्राद्रिभेत्तः ! सुखमुनिसुमतोद्वृद्धिकारिन् ! सुधीन्द्र !
प्राचीनाचार्यपीठप्रभुरखिलगुणैः कोऽस्ति धन्यस्त्वदन्यः ॥

## ३. व्याख्याकारपरिचयः

(श्रीमत्सुमतीन्द्रतीर्थश्रीपादाः)

सकलभुवनभूषायमाणे कर्नाटकसाम्राज्ये विजयनगरीयराजास्थाने महाविद्वत्पदमलङ्कुर्वन् कृष्णाचार्यनामा पण्डितपुण्डरीकः, राज्ञा आदृतः विबुधमण्डल्या मानितः, पौरजानपदैः पूजितः विलसति स्म । स कृष्णाचार्यः हृद्यानवद्यविद्याविद्योतिते विद्वद्वरविशोभिते वैदुष्यसद्भक्तिवैराग्यसौशील्यादि सद्गुणसद्मायमाने 'वीगमुद्रे'ति प्रथिते गौतमगोत्रे षाष्टिके[१] सदन्ववाये क्रिस्ताब्दीय पञ्चदशे शतके प्रसूतः कुशाग्रमतिः प्रतिभासम्पन्नस्स कृष्णाचार्यः विद्याविनयसत्कर्मानुष्ठानादिसद्गुणैस्समैधत ।

"सदधार धरोदरे प्रसिद्धाः निरवद्या विविधा द्विजातिविद्याः ।
स बभूव च वैणिको यथार्थं निजविद्याधरतां विधातुकामः ॥"

कृष्णसूरिरयं निजविद्यागुरूणां श्रीव्यासराजयतिसार्वभौमानां "राजगुरूणां" कृपानुग्रहबलेन राजास्थाने महाविद्वत्पदं, संस्कृतविद्यापीठेऽध्यापक-पदञ्चालञ्चकार । अद्वितीयोऽपि सद्वितीय एष आचार्यः सानन्दं सर्वजनादृतः विजयनगरे निवसति स्म । अस्य सकलशास्त्रपाण्डितीं, गान्धर्वविद्याचातुरीं, वीणावादननैपुणीञ्च दर्शं दर्शं कर्नाटकसार्वभौमः कृष्णदेवरायः आचार्यस्य

---

१. कर्नाटकभाषायां "अरवत्तु वक्कलु मनेतन" इति वदन्ति ।

शिष्यवृत्तिमभ्युपगम्य गान्धर्व-वीणावादनकलासु प्रावीण्यं समासाद्य गुरुदक्षिणापदशेन मौक्तिकमाला—पीताम्बर—स्वर्णाभरण ग्रामदानपुरस्सरमेन-मतिशयगौरवेण सममानयत्।[२]

कृष्णाचार्यस्य कनकाचलाचार्यनामा पुत्र आस। तस्य तिम्मणाचार्यनामकः सत्पुत्रोऽजायत। बालकतिम्मण्णः पित्रा अष्टमे वर्षे उपनीतः कुलगुरुभ्यः श्रीविजयीन्द्रतीर्थेभ्यस्सकलशास्त्राण्यधीत्य गुर्वाज्ञया गार्हस्थ्ये पदं न्यधत्त। तस्य पत्नी गेपिकाम्बिका नामिका आसीत्। सा निगमस्य स्मृतिवत्, दिननाथस्य पद्मिनीव, वसिष्ठस्य अरुन्धतीव, रजनीसुहृदः कुमुद्वतीव पतिपरायणा ललास। एतादृशगुणवत्या स्वपत्न्या गोपिकाम्बादेव्या समन्वितस्स तिम्मणाचार्यः गुरुवराणामादेशानुसारं विद्यापीठाध्यक्षपदे स्थापितः पाठ-प्रवचननिरतः "कावेरीपट्टणा"भिधे ग्रामवरे निवसति स्म।

**"अथ तुण्डिलमण्डलेऽग्रहारे लसिते पट्टणनाम्नि वासयोग्ये।**
**कमलारमणं प्रसाद्य कान्तामिलितः कानपि वत्सरान्यनैषीत्॥"**

तिम्मणार्यस्यास्य सर्वंकषविद्यावैखरीं वीणावादननैपुणीं च समवलोक्य कर्नाटकसाम्राट् इम्मडी श्रीरङ्गराजः हम्पीक्षेत्रे विद्वत्सभायां आचार्यममुं "दिवादीप"[३] धनकनकाभरणभूम्यारामप्रदानेन सबहुमानमसेवत।[४]

गोपिकाम्बा-तिम्मणार्ययोः सुप्रसन्नो भगवान् ताभ्यां वेङ्कटाम्बिकानामिकां पुत्रीमनुजग्राह। तदनु कुलदेवस्य श्रीवेङ्कटेशस्य वरबलेन द्वौ पुत्रावजायेताम्। परमानन्दभरितो तिम्मणार्यः ज्येष्ठस्य 'गुरुराज' इति, यवीयसः 'वेङ्कटनाथ'[५] इति च नाम चकार। प्रवृद्धो गुरुराजाचार्यः श्रीसुधीन्द्रतीर्थेषु चतुश्शास्त्राण्यध्यगीष्ट।

---

२. उपदिश्य स कृष्णभूवरालेर्निजगान्धर्वकलां कलामगृह्णात्।
घनमौक्तिकगुच्छहारपूर्वां बिरुदालीं गुरुदक्षिणापदेशात्॥ —श्रीराघवेन्द्रविजयकाव्यम्

३. कर्नाटकभाषायां "हगलु दीवटिके" इति वदन्ति।

४. अभजन्नृपतेर्दिनप्रदीप्तं स तु विष्वक् प्रबलप्रतापरश्मिम्।
दिनमण्यनुवर्तितस्य शान्त्यै स्वसमानेतरवाक्तमिस्रराशेः॥
ध्रुवमेष दिनप्रदीपमागादहिताकीर्ति तमोगुणप्रमायै।
गुणिनस्सकलस्य बाह्यतेजोयुत चक्षुर्विषयत्वमादधानः॥ —राघवेंद्रविजयः।

५. श्रीराघवेन्द्रस्वामिनः।

आचार्यस्यास्य कमलादेवीनामिका पत्न्यासीत् । सा पुत्रमेकमसोष्ट । गुरुराजाचार्यः स्वपुत्रस्य "वेङ्कटनारायण" इति नाम चकार । वेङ्कटनारायणः बाल्ये स्वतातपादे तदनु पूर्वाश्रमीय पितृव्येषु (श्रीराघवेन्द्रतीर्थेषु) निखिलविद्या अध्यगीष्ट ॥

श्रीवेङ्कटनारायणाचार्याणां १. वेङ्कण्णः २. वासुदेवः ३. मुद्दुवेङ्कटकृष्णः ४. विजयीन्द्रः ५. गरुडवाहनलक्ष्मीनारायणः — इति पञ्च पुत्रा अजायन्त । तेषु तृतीयः मुद्दुवेङ्कटकृष्ण नामक एव कृतेरस्याः "अलङ्कारमञ्जर्याः" व्याख्याकारः (भावि श्रीसुमतीन्द्रतीर्थाः)

बाल्य एव कमलसम्भवमनोहरिण्या काव्यदेव्या गैर्वाण्या सानुग्रहकृपाकटाक्षविक्षेपैरभिवर्षितोऽयं मुद्दुवेङ्कटकृष्णाचार्यः नैजेन आशुकविता-रचनाचातुर्येण सर्वान्विस्मापयंश्चकितचकितैस्तैः श्लाघाकम्पमानशिरैराद्रीयते स्म । सरससुन्दरविविधालङ्कारसमलंकृतकवननिर्माणधुरीणोऽयमाचार्यः शैशवे निजतातपादैः काव्यनाटकालङ्कारादि साहित्यशास्त्रं, तदनु श्रीराघवेन्द्रस्वामिपादेभ्यः सश्रद्धं षड्दर्शनान्यप्यधीत्य सर्वतन्त्रेष्वप्यतिशयपाण्डित्यमासाद्य स्वीयगुरुभक्ति-पाण्डित्य—प्रतिभापुञ्जरञ्जित वाग्वैखरीविलासेन स्वायत्तीकृतगुरुहृदयः राघवेन्द्र-यतीन्द्राणामतिशयवात्सल्यानुग्रहभाजनं बभूव ।

श्रीराघवेन्द्रस्वामिनोऽप्यस्मिन्नसाधारणप्रेमादरं कुर्वन्ति स्म । गुरुसार्वभौमाः स्वपौत्रभूतस्य (पूर्वाश्रमीयाग्रजपौत्रस्य) मुद्दुवेङ्कटकृष्णाचार्यस्य (भावि श्रीसुमतीन्द्रतीर्थानां) साहाय्यं भूयादिति उडुपिक्षेत्रे "न्यायमुक्तावलिः, तन्त्रदीपिका, चन्द्रिकाप्रकाशः, न्यायसुधापरिमलः" इत्यादि ग्रन्थरत्नान्यरचयन्निति 'श्रीराघवेन्द्रविजय'कारा एवमुपावर्णयन् ।

**"भाव्यसंशयमहो गुरुवंशे दर्शनश्रुतिपरः सुमतीन्द्रः ।**
**तस्य सार्थकमिदं सकलं स्यादित्यवेत्य कृतवान्कृतिसार्थम् ॥"**

एतेनाचार्येऽस्मिन्मन्त्रालयमुनीन्द्राणां वात्सल्यानुग्रहादिकं कीदृशमित्यव-गम्यते । इमे आचार्याः विद्याभ्यासानन्तरं गुर्वाज्ञया गार्हस्थ्यधर्ममवलम्ब्य सपत्नीकाः तञ्जापुर्यां राजास्थाने महाविद्वत्पदमलङ्कुर्वन्तस्तत्र कतिपयवत्सराननैषुः ।

श्रीराघवेन्द्रगुरुसार्वभौमानां सशरीरबृन्दावनप्रवेशानन्तरं (१६७१) श्रीपादाग्रजानां श्रीगुरुराजाचार्याणां ज्येष्ठपुत्राः श्रीवेङ्कण्णाचार्याः[६] (१६७१ – १६८८) श्रीयोगीन्द्रतीर्थनाम्ना, तदनु तदनुजाः श्रीवासुदेवाचार्याः[७] श्रीसूरीन्द्रतीर्थनाम्ना, (१६८८ – १६९२) श्रीमध्ववेदान्तसाम्राज्यं अलंचक्रतुः ।

श्रीयोगीन्द्र-श्रीसूरीन्द्रतीर्थानां महासंस्थानपरिपालनसमये मङ्गम्मनाम्नी राज्ञी (१६८९-१७०६) मधुराराज्यं पालयति स्म । तञ्जापुरराज्यं एकोजीमहाराजस्य (शिवाजीमहाराजस्य सहोदरः) पुत्रः शाहजी (शाहु) महाराजः परिपालयन्नासीत् । शाहुभूपः मुद्दुवेङ्कटकृष्णाचार्याणां प्रकाण्डपाण्डित्येन वाक्यार्थवैशिष्ट्येन काव्यनाटकालङ्कारादि साहित्यकृतिनिर्माणवैदग्ध्यादिभिश्चाकृष्टः तान्स्वाचार्यस्थाने सादरं मानयति स्म ॥

एते आचार्याः तद्राजास्थाने विविधकाव्यालङ्कारसङ्गीतप्रबन्धानरचयन् । स्वशिष्यप्रबर्हस्य तञ्जापुराधीश्वरस्य शाहजीन्द्रस्य अप्रतिमपराक्रमशौर्यौदार्य-विद्यापक्षपात–विद्वत्कविकलाकारसंपोषण-विद्यावैभव प्रजारञ्जनाद्यतिशयसद्गुणा-नवलोक्य तद्गुणनिरूपणपराणि १. "बिरुदावलिः, २.जयघोषणा, ३. शाहुराजविजयः (सङ्गीतशास्त्रग्रन्थः), ४. शाहुराजप्रसङ्गः, ५. चक्रवालप्रबन्धः, ६. नारायणीयगाथाप्रबन्धः" इत्यादि लघुकाव्यानि विरचय्य विद्वत्सभायां प्रकाशयन् । एते ग्रन्थाः भारतीयविबुधमण्डलीषु विद्वत्कविजनैस्सादरं सम्मानिता निरतिशयकीर्तिमापेदिरे । महानन्दसन्दोहतुन्दिलो शाहुमहाराजः सबहुमानमिमान् धनकनकवस्त्राभरणपूरैर्ववर्ष ॥

## वेदान्तसाम्राज्याभिषेकः

श्रीमदाचार्यमहासंस्थानाधीश्वराः श्रीमत्सूरीन्द्रतीर्थपूज्यपादाः स्वावसानकाले स्वपूर्वश्रमानुजानिमान् पण्डितपुण्डरीकान् श्री मुद्दुवेङ्कटकृष्णाचार्यान् परमहंसाश्रमप्रदान-गुरुमंत्रोपदेशपूर्वकं **"श्रीमत्सुमतीन्द्रतीर्थश्रीपादा"** इत्यभिधानेन श्रीमन्मध्ववेदान्तसाम्राज्यदिग्विजयविद्यासिंहासने प्रतिष्ठाप्य साम्राज्याभिषेक-

६. व्याख्याकाराणां ज्येष्ठभ्रातरः
७. व्याख्याकाराणां द्वितीयाग्रजाः

पूर्वकं सातिशयमन्वगृह्णन् । वेदान्तसाम्राज्याधिपत्यप्राप्त्यनन्तरं यतिपतितति-समितिविहित जपतपस्सद्व्रतानुष्ठाननिष्ठाः, परबुधपर्वतपक्षविक्षोभणदक्षाः, अतिमतिसिद्धान्तप्रतिष्ठापनधुरन्धराः, निखिलराजाधिराजमुकुटकिरीटतटघटित-चरणपङ्कजाः, निरन्तरहृदन्तरकमलपीठप्रतिष्ठापितस्वेष्टबिम्बरूपि श्रीमूलरघुपति-वेदव्यासदेवदिव्यपादपद्मन्यस्तचित्तवृत्तयः, निखिलविद्वन्मणिगणसंस्तूयमान-सद्गुणगणसंशोभितचित्रविचित्रसच्चारित्र्यविस्मापितसर्वप्रपञ्चाः पदवाक्यप्रमाण-पारावारपारीणशेखराः परमहंसकुलसार्वभौमा इमे श्रीमत्सुमतीन्द्रसंयमीन्द्राः दिगन्तविश्रान्तकीर्तिचन्द्रिकया विलसन्तो त्रयस्त्रिंशद्वत्सरेषु (क्रि. श. १६९२—१७२३) श्रीमद्धंसनामक परमात्मप्रवर्तित ज्ञानसाम्राज्यं परिपालयन्तो भारतवर्षं सम्भूषयामासुः ॥

## दिग्विजययात्रा

श्रीसुमतीन्द्रतीर्थाः मध्वमहापीठाधिपतयः परम्परागतसत्सम्प्रदायमनुसृत्य लोककल्याणमनुसन्दधानः दिग्विजययात्रां स्वीकृत्य स्वाश्रमोचित पाठप्रवचन-परवादिदिग्विजय-शिष्यभक्तजनोद्धरणपूर्वकं पवित्रतीर्थक्षेत्राण्यटित्वा तत्तत्तीर्थक्षेत्रदेवतासेवनादिना हृष्टान्तःकरणा स्वपादरजोभिः भारतभूमिं पावयन्तो निखिलधार्मिकवृन्दसंसेविताः, पण्डितमण्डल्याऽऽदृताः मनुजपतिभिस्सम्पूजिताः सर्वत्र द्वैतविजयदुन्दुभिमुद्घोषयांबभूवुः ।

तत्र तत्र राजसभासु श्रुतिस्मृतिपुराणेतिहासवचनपरिबृम्हितां श्रीमध्वसिद्धान्तरीति विवृण्वन्तः विपक्षपक्षमुत्क्षिपन्तः स्वसिद्धान्तमुद्घोषयन्तः, सांख्यार्हतसौगततार्किकशैवादिवादान्निरस्यन्तो अतुलां कीर्तिमलभन्त । एवमन्यत्रापि क्वचित्कर्मतन्त्रप्रवीणान्मायावादिनः प्राचीनदुर्विदग्धदुरासाध्यवादा-भासविपर्यस्तधिषणान् धिषणं मन्यान् श्रुतिस्मृत्युपोद्बलितयुक्तिसरैः निरपवाद-प्रसरैर्निरुत्तरीचक्रुः इमे नवीनतर्कतन्त्रकुशला वैदिकसद्वैष्णवसिद्धान्त-प्रतिष्ठापनधुरीणाः श्रीसुमतीन्द्रगुरुचरणाः ॥

## राजसम्मानम्

"राणी मंगम्म" नाम्नी मधुराराज्याधीश्वरी श्रीरङ्गक्षेत्रे नैकमठाधीश्वरैरलंकृतायां, त्रिमतस्थपण्डितविभूषितायां स्वप्रवर्तितमहाविद्वत्सभायां दिनत्रयपर्यन्तं सकलशास्त्रेषु परविबुधान्स्ववाग्वैखरीभरेण निरुत्तरीकुर्वतः स्वगुरूनिमान् श्रीसुमतीन्द्रपूज्यचरणानसाधारणबिरुदप्रदानादिभिः सम्भावयांचक्रे। तदनु सा महाराज्ञी क्रिस्तशक १६९७ तमे ईश्वरसंवत्सरे माघशुक्लपौर्णमास्यां "श्री विल्लिपत्तूरु मण्डले"-"आयिर्धर्म" नामकं सम्पद्भरितं ग्रामं, श्रेष्ठमेकं मठं कनकाभरणादिकञ्च समर्प्य सुमतीन्द्रानसेवत। स्वकृतसेवया संतृप्तिपूर्तिमनासाद्य सा राज्ञी पुनरपि गुरुवरानिमान् अपूर्वेण केनचिदुपहारेण संसेवयितुमभिलषन्ती, भगवतः श्रीकृष्णस्य महिषीषु विख्यातया नीलादेव्या निजकरकमलेनार्चितां वंशपरंपरया स्वप्राचीनैरवनिपालैरभ्यर्चितां अनर्घमणिमयीं श्री-भू-दुर्गा समेत शेषशय्याविलसितवैकुण्ठवासुदेवस्य प्रतिमां[८] श्रीसुमतीन्द्रगुरुभ्यः समर्प्य[९] स्वात्मानं धन्यं मन्यमाना प्रमोदभरनिर्भरा बभूव॥

**श्रीभूदुर्गासमेतं मणिमयवपुषं शेषशय्याविलासं**
**नीलार्च्यं वासुदेवं स्वकुलनृपतिभिः प्रार्च्यमानं सुभक्त्या।**
**पारम्पर्येण राज्ञी स्वकुलगुरुभरोः शास्त्रकाव्यादि कर्त्रे**
**दत्वाविद्याप्तकीर्तेस्सुमतियतिवरेभ्येष्टसिद्ध्यै ननाम॥**

एवं तञ्जापुरराज्याधीशः शाहुमहाराजः स्वोद्धारकपूज्यगुरुवर्यानिमान् श्रीसुमतीन्द्रतीर्थश्रीपादान् स्वर्णपीठे प्रतिष्ठाय लौकिकवैदिकविद्वज्जन पौरजानपदसमलंकृते राजसभायां सुवर्णमुद्रिकानवरत्नमणिभिरभिषिच्य ग्रामभूम्याराम गजतुरगान्दोलिकापल्यङ्कदिवादीपश्वेतछत्र चामरमकरतोरणबिरुदावल्याद्यसाधारणराजगौरवादिभिः असेवत।[१०]

---

८. "अनर्घ्यमणिमय्यर्चा श्रीभूदुर्गासमन्विता।
पाण्ड्यभूपतिभिर्दत्ता सुमतीन्द्रयतीशितुः॥" – श्रीराघवेन्द्रमठगतार्चागतिक्रमः।

९. श्रीभूदुर्गासमेतः श्रीवैकुण्ठवासुदेवः अद्यापि श्रीराघवेन्द्रस्वामिनां मठे प्रत्यहं पीठाधिपतिभिस्संपूज्यमानो विद्योतते।

१०. १). Madras Arch. Report.
२). संस्कृत पत्रिकाजाल.

एवमेत्र चेञ्जिराज्याधिपतिः उत्तमरङ्गप्पनायकः क्रिस्तशक १६९९ तमे वर्षे ग्रामभूमिकनकमुद्रिकानिवहवस्त्राभरणप्रदानपूर्वकं सभक्तिप्रकर्षं श्रीसुमतीन्द्रतीर्थानसेवत।[१]

श्रीगुरुपादाः सञ्चारक्रमेण आरणीराज्यमाजग्मुः। तदा तद्देशपालकः सुभानुरायः श्रीपादान् राजगौरवेण सच्चकार। स सुभानुराजः व्याकरणशास्त्रे काव्यनिर्माणे च प्रवीण आसीत्। अत एव सः परेद्युः गुरुवराणां व्याकरणशास्त्रप्रावीण्यं परीक्षितुं श्रीपादानां पुरतः व्याकरणशास्त्रे पूर्वपक्षमकरोत्। सुमतीन्द्रास्तस्य पूर्वपक्षं तत्क्षणमेव शतशः खण्डयित्वा महाभाष्योक्तदिशा सिद्धान्तं प्रतिपाद्य सुभानुराजं निरुत्तरीचक्रुः। स्वपराभवेण मुखभङ्गेन च अन्तः प्रकुपितः गुरुवरानवलोक्य अपहसन् सः "अयि स्वामिनः! भवतां पाणिनीयशास्त्रकौशलेन महानानन्दः सञ्जातः। अस्तु नाम। भवतां साहित्यशास्त्रे प्रवेशोऽस्ति वा यत्किञ्चिदपि कवनग्रथने परिचयोऽस्ति वा ?" इति पप्रच्छ। तस्य कुहकमगणयन्तः, दरहासरञ्जितवदनाः श्रीपादा आशुकवितया एवमवदन्:—

**"अनाराध्यकालीमनास्वाद्य चोलीम्**
**विना मन्त्रतन्त्रैः ऋते शब्दचौर्यात्।**
**प्रपञ्च प्रसिद्धप्रबन्धं विधातुम्**
**विरिञ्चप्रपञ्चे मदन्यः कविः कः ?"**

अयि राजन्! काल्याराधनेन नाहं कविरभवम्। यथा भवान्, ज्योतिष्मती (चोली) तैलपानेन न मया काव्यनिर्माणचातुरी सम्पादिता। न च मया मन्त्रतन्त्रादिभिरासादिता कवनशक्तिः। अथवा परकृतप्रबन्धपदचौर्येण काव्यादीनि न ग्रथितानि, परं श्रीमत्सुधीन्द्रगुरुकारुण्यसरणिं प्रपन्नोऽस्मि। अतः चतुराननविनिर्मितेऽस्मिन्प्रपञ्चे पूर्वोक्तरीतिं विना लोकप्रसिद्धकाव्यनिर्मापकः मदन्यः कोऽपि कविरस्ति वा? इति। सः सुभानुरायः ज्योतिष्मती(चोली)तैलपानेन कवनकरणसामर्थ्यं सम्पाद्य दुरहङ्कारेण वर्तते स्म। अपरोक्षज्ञानिनः खलु श्रीसुमतीन्द्राः। अत एव ते जोतिष्मतीतैलपानप्रभावेणायं कविः संवृत्त इति जानंतः तस्य काव्यनिर्माणकौशलरहस्यं अन्यापदेशेनोद्घाटयामासुः। सुभानुरायः

---

१. श्रीमठे विद्यमान दानपत्रताम्रशासनानि

स्वीयकवनकरणरहस्यस्फोटरूपेण श्रीपादानां वाग्वज्राघातेन जर्झरिताङ्गः लज्जयाधरितमुखो भूत्वा तूष्णीमास मुहूर्तकालम्। तदनु कथंकथमपि धैर्यमवलम्ब्य साष्टाङ्गं प्रणिपत्य साञ्जलिबन्धमीषत् स्मितवदनः "जितोऽस्मि" इति विज्ञाप्य गुरुपादानाशुकवितासुधया वर्षयन् एवमस्तौषीत्:—

**"प्रतिमत(मठ) मुदरंभरयो यतयो बहवो हन्त वर्तन्ताम्(वर्तन्त) ।**
**सुमतियते विततमते भवता समतां कः पुमानियेत ।।"**

तदनन्तरं सुभानुरायः पुनरपि साष्टाङ्गं प्रणम्य गुरुवरान् "अयि महास्वामिनः, शिष्यकोटिप्रविष्टं विधाय मां प्रसन्नकटाक्षक्षेपैरनुगृह्णन्त्विति व्यजिज्ञपत्। सुमतीन्द्रतीर्था अपि मन्दहासविकसितवदनाः पश्चात्तप्तं तं अभयप्रदानेन सान्त्वयन्तः "राजन्! त्वत्प्रार्थनां पूरयिष्याम" इत्यवदन्। सुमतीन्द्रयतीन्द्राणाममृतमयानुग्रहवचनेन परमानन्दपुलकितशरीरः सुभानुरायः अलंकृत्य यतिवरान्निजे भद्रपीठे "राहुकेतुवाद्य—चित्रासनद्रय छत्रचामरबिरुदावली—नवरत्नाभरणाद्यर्पणेन" सुमतीन्द्रतापसवरान् संसेव्य कृतार्थोभूत् ॥

यतिवर्या इमे सञ्चारक्रमेण महीशूरराज्यं प्रत्यागत्य तद्देशाधिपतिना सम्मानिताः बेङ्गलूरुनगरे 'चिक्कपेटे' इति प्रथिते प्रदेशे स्वमठे श्रीमदाञ्जनेयप्रतिमां श्रीराघवेन्द्रबृन्दावनञ्च प्रतिष्ठाप्य ततः चित्रदुर्गं प्राप्य तद्राज्यपालकेन ग्राममेकं स्वीकृत्य चित्रदुर्गे पूर्वं श्रीराघवेन्द्रस्वामिनः, स्वशिष्याय वेङ्कण्णाय यत्र मोक्षं प्रददुः, तस्मिन्परमपावने स्थले पूर्वं पाण्डवैस्समर्चितं प्राणदेवं प्रतिष्ठाप्य सर्वानुद्धरन्तः तदनु चित्रदुर्गात्प्रस्थिताः सञ्चारक्रमेण पुनरपि स्वकार्यक्षेत्रभूतं श्रीरङ्गं प्रापुः ॥

## ग्रन्थरचना

श्रीसुमतीन्द्रतीर्था इमे श्रीमद्विजयीन्द्रतीर्थ—श्रीमत्सुधीन्द्रतीर्था इव प्रायः सकलशास्त्रेष्वप्यनन्यसाधारणानि ग्रन्थरत्नान्यरीरचन्। परमहंसकुलशेखरा श्रीसुमतीन्द्रतीर्थाः भारतीयवैदिकवाङ्मयं द्वैतवाङ्मयञ्च स्वकृतप्रौढप्रबन्धरूपोपहारैस्समृद्धमातन्वन्तो अनन्यसाधारणीं सेवामकुर्वन्नित्ययं विषयः विशयकोट्यतीतः नैतद्वक्तव्यं सुधीसमुदये। प्रस्थानत्रये मन्त्रशास्त्रे, न्यायमीमांसा-व्याकरणादिशास्त्रेष्वपि तैर्विरचितानि ग्रन्थरत्नान्यद्यापि विद्वन्मान्यानि

विद्योतन्ते। गुरुवराणामसदृशज्ञानकार्यमवलोक्य पण्डितप्रकाण्डा इमान् "द्वितीयविजयीन्द्रतीर्था" इति सबहुमानं सादरञ्च भक्त्या स्तुवन्ति। अत एव एतादृशप्रौढप्रबन्धनिर्मातारो यतीश्वरा इमे जगन्मान्यकीर्तिं प्रतिष्टाञ्चाप्रुवन्॥ श्रीगुरुपादविरचितेषु ग्रन्थरत्नेषु श्रीपरिमलविद्यामन्दिरे, अन्यत्र च विद्यमानानि, नाममात्रश्रुतानि च अधो निर्दिष्टानि॥

१. ऋग्भाष्य टीका भावरत्नकोशः
२. ब्रह्मसूत्रभाष्यतत्त्वप्रकाशिका भावरत्नकोशः
३. गीताभाष्यप्रमेयदीपिका भावरत्नकोशः
४. सव्याख्या मन्त्ररत्नकोशः
५. अलङ्कारमञ्जरीव्याख्या मधुधारा
६. सुभद्रापरिणयनाटकव्याख्यानम्
७. उषाहरणकाव्यव्याख्यानम्
८-९. सव्याख्या श्रीरामतारावलिः
१०-११. सव्याख्या श्रीरामदण्डकम्
१२-१३. सव्याख्या श्रीयोगीन्द्रतारावलिः
१४-१५. सव्याख्या बिरुदावलिः
१६-१७. सव्याख्या जयघोषणा
१८-१९. सव्याख्या शाहुराजविजयः
२०-२१. सव्याख्या शाहुराजप्रसङ्गः
२२-२३. सव्याख्या चक्रवालप्रबन्धः
२४-२५. सव्याख्या नारायणीयगाथाप्रबन्धः
२६-२७. सव्याख्या देवराजस्तुतिः
२८. श्रीनृसिंहस्तुतिव्याख्या एकावलिः
२९. संस्कृतपत्रिकाजालः
३०. विरोधोद्धारः

३१. श्रीव्यासराजविजयव्याख्यानम्

३२. श्रीराघवेन्द्रविजयव्याख्यानम्

३३. श्रीविजयीन्द्रतीर्थविरचित श्रीनृसिंहाष्टकव्याख्यानम्

३४. श्रीराघवेन्द्रस्तोत्रव्याख्यानम्

३५. वादावलीटिप्पणी

३६. भेदोज्जीवनटिप्पणी

३७. चन्द्रिकाटिप्पणि

३८. न्यायामृतभूषणम्

३९. न्यायसुधाटिप्पणी (परिमलानुसारिणी)

४०. प्रमाणपद्धतिव्याख्यानम् — इत्यादीनि ।

श्रीसुमतीन्द्रतीर्थश्रीपादानिमान् दक्षिणभारतीयाः "शकपुरुषा" इति स्तुवन्ति । श्रीराघवेन्द्रस्वामिनां मठः दक्षिणदेशे अद्यापि "श्रीसुमतीन्द्रमठः" इति प्रसिद्धो विलसति । एतादृशा प्रसिद्धिः श्रीसुमतीन्द्राणां व्यक्तित्वप्रकर्षकत्वं च द्योतयतीति किमु वक्तव्यम्? परिचयनिरूपकेऽस्मिन् लेखने गुरुवराणां वर्णरञ्जितचारित्र्यम्, अपूर्वमहिमाप्रदर्शनम्, विद्वत्पोषणम्, भक्तशिष्य-वांछित प्रदानादिवैशिष्ट्यम्, विद्वदग्रहारनिर्माण-ग्रामवृत्तिगृहदानाद्यौदार्यम्, परमतविबुधेषु प्रदर्शितसौहार्दम्, गुरुवर्यजीवनकालीनस्वरसप्रसङ्गादीनि चात्र निरूपयितुं वयमशक्ता इति निवेद्य अत्रैव विरमामः ॥

एवं ज्ञानभक्तिवैराग्यपाठप्रवचनग्रन्थनिर्माण, परवादिदिग्विजय सिद्धान्तस्थापन राजसम्मानाद्यसाधारणकार्यजातेन वैदिकमतस्य मध्वसाम्राज्यस्य च सुप्रतिष्ठां बहुमुखेनोद्दीपितवतां श्रीमत्सुमतीन्द्रतीर्थश्रीपादानां कीर्तिराचन्द्रतारं विलसति इत्यत्र न कापि संशीतिः । एवं स्वयशोविभासितदिगन्तराला इमे पूज्यपादा अन्ते स्वपूर्वाश्रमीयानुजान् श्रीविजयीन्द्राचार्यान् परमहंसाश्रमप्रदानपुरस्सरं श्रीमन्मध्वसाम्राज्ये **"श्रीमदुपेन्द्रतीर्थ"**नाम्ना अभिषिच्य श्रीरङ्गक्षेत्र एव श्रीमन्नारायणध्यानपूर्वकं स्वावतारपरिसमाप्तिमातन्वानाः परमगुरु श्रीयोगीन्द्रतीर्थबृन्दावननिकटे निजबृन्दावने कीर्तिशरीरेणाद्यापि विद्योतन्ते इति सर्वमनवद्यम् ॥

"पूर्णप्रज्ञमताम्बोधिपूर्णेन्दुमकलङ्किनम् ।
सुजनाम्बुधिभास्वन्तं सुमतीन्द्रगुरुं भजे ॥"

दुर्वादीन्द्रकरीन्द्रगर्वदलने सिंहप्रबर्हायितः
श्रीमन्मध्वमुनीन्द्रसन्मतप्रतिष्ठाने जयीन्द्रायितः ।
काव्यालंकृतिनाटकप्रणयने श्रीमत्सुधीन्द्रायितः
सत्कीर्त्या सुमतीन्द्रदेशिकमणिः बाभाति भूमीतले ॥

## ४. ग्रन्थसंग्रह-संशोधनम्

वयमिदानीं सव्याख्यालङ्कारमञ्जरीग्रन्थसङ्ग्रह–संशोधन विषये किञ्चिन्निवेदयितुमीहामहे । द्वैतसिद्धान्तोपरि श्रीमद्विजयीन्द्र–सुधीन्द्र–राघवेन्द्र–सुमतीन्द्र–वादीन्द्र–धीरेन्द्र–भुवनेन्द्र– व्यासतत्वज्ञतीर्थप्रमुखज्ञानिनायकैः द्वैत-सिद्धान्तोपासकैरितरज्ञानिवर्यैश्च विरचितान्यप्रकाशितानि शताधिकग्रन्थरत्नानि श्रीराघवेन्द्रगुरुसार्वभौमानां पूर्वाश्रमवंशीयानां गृहेषु तत्कालमारभ्य संरक्षितानि विलसन्तीति विदितचरमेव विबुधवराणाम् । क्रि. श. १९४५ तमे वर्षे श्रीराघवेन्द्रगुरुवराणामुभयवंशाब्धिचन्द्राणां परमपूज्यानामस्मत्परिमलविद्या-मन्दिरस्थापकानां कीर्तिशेषाणां श्री १००८ श्रीसुयमीन्द्रतीर्थश्रीपादानामाज्ञानुसारेण "श्रीपरिमलसंशोधनप्रकशनमन्दिर"स्थापनपूर्वकं प्राचीनग्रन्थसंग्रहकार्ये प्रवृत्ताना-मस्माकं श्रीसुयमीन्द्रतीर्थानां पूर्वाश्रमीयपुत्रैरस्मज्ज्येष्ठभ्रातृभिश्श्रीमद्भिः पं ॥ राजा श्री वेणुगोपालाचार्यैः, तथास्मत्पितृव्यैः पं ॥ रा. जयरामाचार्यैः श्रीगुरुवंशजातैः श्री. जि. पुरुषोत्तमाचार्य – पु ॥ सेतुमाधवाचार्यप्रमुखैश्च स्वगृहस्थानि शताधिकानि ग्रन्थरत्नान्यस्मद्विद्यामन्दिराय सानुग्रहं प्रदत्तानीति विदितमेव समेषां सज्जनानाम् ।

एवमस्माभिस्संग्रहीतेषु ग्रन्थेषु "अलङ्कारमञ्जर्याः" तद्व्याख्या "मधुधारा"याश्च तालपत्रात्मके द्वे, हस्तलिखिते द्वे, आहत्य ग्रंथचतुष्टयमुपलब्धम् । वयमेतद्ग्रन्थचतुष्टयमवलम्ब्य क्रि. श. १९६१ तमे वर्षे एव सव्याख्यामलङ्कारमञ्जरीम् अस्मद्विद्यागुरूणां विद्वद्भूषणं श्री दुर्ग भीमाचार्य, "पण्डितरत्नं" श्री दो. वासुदेवाचार्य, "विद्यारत्नं" आचार्य वेङ्कोबाचार्याणां तथास्मत्सुहृदां "वेदान्तरत्नं" श्री हुलिकुण्टे श्रीनिवासाचार्य, "विद्यारत्नं" रित्ति

वेङ्कण्णाचार्याणां सहकारेण संशोधनकार्यं निर्वाह्य शुद्धप्रतिग्रन्थं निर्माय मुद्रणाय सज्जीकृतम् ।

किञ्च क्रि.श. १९७४ तमे वर्षे मद्रपुरीय प्रो ॥ वि. राघवन् महोदयानां सहकारेण भारतसर्वकार्यस्य विद्यामन्त्रालयस्य धनसाहाय्येन (Grant-in-aid) वयं मुद्रणकार्यनिर्वहणाय बेंगळूरुनगरं प्रति प्रस्थिताः । परमस्माकं दौर्भग्येन प्रवाससमये धूमशकटे कथंकथंचिदपि मुद्रणोपयोगि शुद्धप्रतिग्रन्थः विनष्टः । एतेनास्मत्परिश्रमः सर्वोऽपि व्यर्थ एव सञ्जातः, अतः ग्रन्थमुद्रणकार्यमपि स्थगितोऽभूत् ।

तदनु सप्तदशवर्षानन्तरं श्रीराघवेन्द्रस्वामिनां मठीय सर्वाधिकारिणः अस्मत्प्रियसहोदराः श्रीपादपुत्राः श्री पं ॥ राजा कृष्णाचार्याः, तथा मन्त्रालयक्षेत्रस्थ श्रीगुरुसार्वभौमसंस्कृतविद्यापीठस्य कार्यनिर्वाहकाः न्यायवेदान्तादिशास्त्रपारंगताः श्री राजा सुज्ञानेन्द्राचार्याश्च (राजा गिरियाचार्याः) "श्रीगुरुसार्वभौमविद्यापीठे पाठप्रवचनार्थं सव्याख्यालङ्कारमञ्जरी पठ्यग्रन्थत्वेनास्माभिः श्रीपादानामाज्ञानुसारेण व्यवस्थापिता, अतः भवद्भिरवश्यं तद्ग्रन्थं मुद्राप्यास्माकं प्रदातव्य"मिति वारंवारं प्रोत्साहयामासुः । एवमुभयश्रीपादपुत्राणां प्रोत्साहनपूर्वकाश्वासनेन लब्धोत्साहा वयं पुनरपि "अलङ्कारमञ्जर्याः" संशोधन–सम्पादन–मुद्रणकार्ये व्यापृता अभवाम इति निवेदयितुमतीव हर्षस्सञ्जायतेऽस्माकम् ।

इदानीमधोनिर्दिष्टग्रन्थपञ्चकसाहाय्येन ग्रन्थसंशोनमकारि ॥

**ग्रन्थमातृकाः**

१. मूलम्:– तालपत्रात्मकम्– श्री. पं. राजा वेणुगोपालाचार्यैः प्रदत्तम् ।
२. (क):–हस्तलिखितम्– ,,
३. (ख):– तालपत्रात्मकम्– श्री. पं. रा. जयरामाचार्यैः प्रदत्तम् ।
४. (ग):– हस्तलिखितम्– परमपूज्यैः श्रीबाळगारुमठाधीशैः श्रीमद्रघुमान्यतीर्थश्रीपादैरनुगृहीतम् ।
५. (घ):– हस्तलिखितम्– धारापुरवास्तव्यैरस्मत्प्रियशिष्यैः डा. सि. बि. एच्. रायमहोदयैस्समर्पितम् ॥

# संशोधनम्

बेङ्गळूरु श्रीचामराजेन्द्रसंस्कृतकलाशालायाः विश्रांतन्यायवेदान्तप्राध्यापकाः न्याय–वेदान्त–साहित्यशास्त्रविद्वांसः, "विद्याविभूषणम्" इत्यादिबिरुदभाजः अस्मत्प्रियसुहृदः प्रो ॥ साणूरु भीमभट्ट, एम्. ए महोदयाः ग्रन्थस्यास्य संशोधनकार्यभारं निर्वाह्य सक्रियसाहाय्यमाचरय्यास्मासु महान्तमुपकारमकुर्वन् । न केवलं संशोधनसाहाय्यमपि तु दिवा नक्तं बहुपरिश्रमेण मुद्रणयोग्यहस्तप्रतिग्रन्थं स्वयं विलिख्य श्रीमत्सुधीन्द्रतीर्थ–श्रीमत्सुमतीन्द्रतीर्थ गुरुपुङ्गवानामनितर-साधारणसेवां विधाय उभयगुरुपादानां विशेषानुग्रहभागिनोऽभवन्निति सज्जनेषु निवेदयितुं सन्तोतुष्यामहे ।

# धन्यवादसमर्पणम्

एतद्ग्रन्थसंशोधनकार्ये स्वकीय्यं सर्वं कार्यमुपेक्ष्यापि महत्साहाय्य-माचरितवद्भ्यः प्रो. साणूरु भीमभट्टेभ्यः अस्मत्कार्तज्ञतापूर्वकान् प्रणामान् समर्पयामः ।

एवं ग्रन्थममुं पठ्यपुस्तकत्वेन व्यवस्थाप्य पञ्चशतग्रन्थान् स्वीकृत्य महान्तमुपकारमाचरितवद्भ्यः तत्रभवद्भ्यः श्रीपादपुत्रेभ्यः श्री राजा कृष्णाचार्य श्री राजा सुज्ञानेन्द्राचार्येभ्यस्सन्त्वास्माकीनाः परस्सहस्रा साशीर्वादसहकृता धन्यवादाः ।

बहुकालानन्तरमपि "मधुधारा" समलंकृताम् "अलङ्कारमञ्जरीम्" मुद्राप्य सहृदयेभ्यो पण्डितप्रवरेभ्यः उपायनीकर्तुं महानानन्दस्सञ्जायते । यथायोग्यं सम्पाद्य विबुधलोकाय प्रदत्तामिमामलंकारमञ्जरीं पाठप्रवचनेन पंडितप्रवरा प्रसारं कुर्वन्ति चेत्तदास्मच्छ्रमस्सर्वोऽपि सार्थको भूयात् । श्रीमद्विजयीन्द्र–सुधीन्द्र–राघवेन्द्र–

सुमतीन्द्रतीर्थगुरुचरणः कृतेरस्याः पाठप्रवचननिरतेभ्यः विद्वद्भ्यः ज्ञानभक्त्यायुरारोग्यसन्मङ्गलादिप्रदानेनानुगृह्णन्त्वित्यभ्यर्थ्य विरमाम इति शम् ॥

प्रजोत्पत्ति संवत्सर
माघ शुक्ल
श्रीमध्वनवमी
१२.२.१९९२

सुधीजनवशंवदः
सम्पादकः
**राजा श्री गुरुराजाचार्यः**
श्रीपरिमलविद्यामन्दिरम्
नञ्जनगूडु—बेङ्गळूरु

# आमुखम्

## (कृतिपरिचयः)

निखिलजगज्जन्मस्थेमप्रलयरचनाशीलवपुषः निरस्तसकलावद्यतमसः नित्यागणितगुणमणिप्रभाविद्योतितस्य श्रियःपत्युराप्ततमः पावनः पवमानः भुवस्तलेऽवतीर्य श्री मध्वनाम्ना प्रथितो बभूव । स च कालबलेन लीनं तत्ववादसूर्यं पुनराविर्भावयामास, वेदपुराणेतिहाससंहितावचनोद्धरणपुरस्सरमुपनिषदां भगवद्गीतायाः ब्रह्ममीमांसाशास्त्रस्य च भाष्याण्यारचय्य, तदितरांश्च प्रकरणग्रन्थान् महाभारतभागवततात्पर्यनिर्णयौ च तदन्यांश्च स्तोत्रयमकभारतादीन् शतं ग्रन्थान् प्रणिनाय । तत्परंपरायामागताः बहवो यतिवरेण्याः आचार्यकृतीनां टीका-टिप्पणी-सारसंग्रहरूपान् निबन्धान् प्रबबन्धुः । एवमध्यात्मशास्त्रप्रपञ्चेऽ नितरसाधारणगौरवान्वितं मेरुशृंगायितमपि माध्ववाङ्मयमिदं सर्वानपि आनन्दसागरे निमज्जयतोऽलंकारशास्त्रस्य रसमाधुरीविधुरत्वान्नीरसमिव यदा भाति स्म तदा श्रीविजयींद्रकराब्जोत्थाः श्रीसुधींद्रतीर्थगुरुपादाः अलङ्कारमञ्जरी, साहित्यसाम्राज्यम् इत्यादीन् ग्रंथानारचय्य आचार्यमतानुयायिनां सहृदयरसिकानां षड्रसपूर्णं भोजनमिव नवरसभरितमेकं नूतनं भोजनं प्रकल्पयामासुः ।

प्रायोऽलङ्कारशास्त्रे नानाविधविलासिनीविलासवर्णनप्रधाने अध्यात्मप्रवणान्तरङ्गाणां शुश्रूषाऽपि दूरदूरताऽऽसीत् लज्जन्ते स्म ते काव्यसाहित्यशास्त्रात् । परंतु अस्मिन् श्री सुधींद्रगुरुप्रणीते ग्रन्थे सर्वाण्यप्युदाहराणि तेषामाचार्यपदानां श्रीविजयींद्रगुरुपादानां वर्णनपराणि श्रोतृणां श्रवणमधुराणि, मानससरसि समुत्फुल्लकमलानीव परमहंसानामपि समास्वादनार्हाणि भवन्ति इत्ययमपरो विशेषः । लोकप्रचलितव्याकरणदूरशब्दप्रयोगेण आचार्यग्रन्थेभ्य उद्विजमानानां केषांचित्, न किमुत केषांचित् समेषामपि अदसीयव्याकरणशाणघर्षणेन प्रकाशमानपदपुंजानुभवेन महान् आनंदः संबोभवीतीत्यत्र सहृदयहृदयान्येव प्रमाणम् । तदेतस्याः मधुरमधुसांद्रायाः चूतमञ्जर्या इवालङ्कारमञ्जर्याः प्रणेतृभ्यः समग्रसाहित्यरसिकसमाजोऽधमर्णः 'नमः सुधीन्द्रकविवर्यपिभ्यः' इति परःसहस्रान् प्रणामानर्पयितुमर्हति ।

बहोः कालादपि क्वापि कोणे निलीनं ग्रंथमिमं तैलजलकीटचोरदुर्जनहस्तसादकृत्वा संरक्ष्य महता समादरेण इदानीं मुद्रापयतां राजा श्री गुरुराजाचार्याणां साहसं नितरामभिनंदनीयमास्ते । परं त्वत्र इदमेकमनुक्त्वा वयं

तूष्णीं स्थातुं नोत्सहामहे — यदस्य ग्रन्थरत्नस्य अनुरूपरूपां चूतमञ्जर्याः रसधारामिव अलङ्कारमञ्जर्याः मधुधारां व्याख्यां प्रणीय क्वचित्क्वचित् मूलग्रंथमप्यतिशयानया वाग्धोरण्या स्वकीयैरेवोदाहरणैः अलङ्कारशास्त्रविमर्शकानद्भुतरससागरनिमग्नानातन्वतां श्रीसुमतीन्द्रतीर्थपरमहंसानां विषये वयं केवलमियदेव वक्तुं प्रभवामः, यत् नमोवाकं प्रशास्महे, भूयिष्ठां ते नम उक्तिं विधेम इति च ।

प्रौढं मूलग्रन्थमनुसृत्य गुरुवच्छिष्यः गुरोरप्यतिशयितः शिष्यः इत्याभाणकानुसारेण क्वचित् क्वचित् ततोऽपि प्रौढतरया शैल्या व्याख्यातवतां श्रीसुमतीन्द्रतीर्थश्रीपादानां व्याख्यानमपि पुनः सरलतरं व्याख्यानमपेक्षते, क्वचिद्विवरणसापेक्षमपि । परंतु कालान्तरे सेयमाशा परिपूर्येत केनचिद्भाग्यशालिनेत्येतावदेवेदानीं वक्तव्यम् । साहित्यशास्त्रप्रपंचे एतावत्पर्यन्तं प्रकाशितेषु ग्रन्थेषु कुत्राप्यदृष्टपूर्वाः बहवो विशेषाः अत्र दरीदृष्यन्ते, तत्र एकमेव स्थलं तावद्दर्शयामः गतप्रत्यागतस्योदाहरणे द्वात्रिंशत्प्रभेदाः प्रदर्शिताः । तावतापि अपरितुष्यन्तः ते

**कविबोधविकासेन चमत्कारविभाजुषाम् ।**
**बन्धानामिह चित्राणामानन्त्यादुपरम्यते ॥**

इत्युक्त्वा लेखनीं विश्रामयन्ति ॥

भागवतधुरन्धरगुरुपादवर्णनात्मकोदाहरणभरितमिदं शब्दालङ्कारविमर्शनात्मकं शास्त्रमर्थालङ्कारेष्वपि तामेव शैलीमनुगच्छन्ती उपमादिहेत्वलङ्कारान्तैः शतेनालङ्कारैः महापुरुषतल्लजान् श्री विजयींद्रश्रीपादानेव लक्ष्यीकरोति सर्वत्राप्यपुनरुक्तरीत्या नूतनप्रज्ञोन्मेषरचितैः पद्यैः । ग्रन्थस्यास्य गुणवर्णने न वयं प्रभवामः, लेशमात्रमिदं प्रार्शयाम । अस्मानपि ग्रन्थसंशोधनकार्ये किंचिदिव सहभगिनः कृत्वा गुरुपादसेवावसरं प्रदत्तवतां पूज्यानां श्री गुरुराजाचार्याणां कृतज्ञतामावेद्य वयं विरमामः ।

बेंगलूरु, २२.१.१९९२ **आचार्यः साणूरु भीमभट्टः**

प्रजोत्पत्तिवत्सरः
पुष्य बहुल तृतीया, बुधवासरः

श्रीः

१. चक्रबन्धः पृष्ठम् - ३१ अलङ्कारमञ्जरी

(बन्धे - "सुधीन्द्रकविता विजयींद्रयशः" इति वर्तते)

विद्यासुस्थितिविश्रुताहितसुधीसांद्रप्रथाकर्तरी
शय्याधीरपिजन्म यस्य तनुते स्फायच्छ्रियाविक्रमैः ।
निस्तन्द्रस्स जयींद्राड्वितरणाधीशः परीतामृते
तेजोभावितमीशमात्मनि सदा रीतिक्रमैः मन्यते ॥

रा.श्री.गु.

२. चक्रबन्धः (पृष्ठम् - ३२) मधुधारा

(बन्धे — "श्री मृदुवेंकटकृष्णविरचितं" इति वर्तते)



रत्नश्रीरुचिराकृतिस्फुरघुरोरम्यप्रभावेन्दिरा
सक्तं मुद्रिततृष्णया सरसया चित्तस्वपाकस्फुरा।
वज्राद्दुष्कर भाविभासुरशरातंकिक्षपाटन्धुरा
राजन्तं रजनीसहायवदनं रामं गिरामो गिरा॥

रा.श्री.गु.

३. हारबन्धः (पृष्ठम् - ३५) अलङ्कारमञ्जरी




लोकालोकावकाशे कृतिपतियतिनः स्थारहार स्वरन्धः
क्षीराम्भोराशिराजा मरवरतुरगाकाशकेशप्रशस्तम् ।
लोलाक्षीलाभिलाषा क्रमशमनमते श्लोकमाकल्पकल्पं
नौमि स्वामित्रमित्रं हृदि मुदितदिशां ध्येयगेश्श्रियस्तम् ॥

रा.श्री.गु.

४. हारबन्धः (पृष्ठम् - ३६) मधुधारा




वन्देहं देवदेवं नुतिनतिकृतिभिः कामधामप्रमर्दि
श्रीभाजं भावभाजां सुरवरसरणि ध्येयगेयप्रयत्नम् ।
वंशे स्वांशेन शेषे परपुरहरणे ज्ञात जातव्रत श्री
रामं श्यामं स्वमंत्र श्रुतिमतिधृतिमद्धीरधीरम्य रत्नम् ॥

रा.श्री.गु.

५. षोडशदलपद्मबन्धः (पृष्ठम् – ४१) 




विद्याविभुविधौ विद्या विनिविष्टा विभाविता ।
विना विष्णुविधीविश्व विज्ञाविर्भुवि के विधुः ॥

रा.श्री.गु.

६. षोडशदलपद्मबन्धः (पृष्ठम् - ४१)




रसारमारतौरक्त रक्षोरणरयारम ।
रविरम्यारजोरक्ष रघुरत्नारतेरमुम् ॥

रा.श्री.गु.

७. खड्गबन्धः (पृष्ठम् – ४५) अलङ्कारमञ्जरी




वारिजारिहारि कान्ति कीर्ति पूर्ति नर्तिता
तादृशावनीशलालसच्चकोर सन्तते।
तेजसांजसा जयींद्र मौनिचंद्र गुंभिता
तावकेन भूनभोंतराल भूर्विराजते॥

रा.श्री.गु.

८. खड्गबन्धः (पृष्ठम् - ४६) मधुधारा




भो जयेयते यतीश लीनभेन भूनभा
भासते दिशादशावरुध्यबुद्धिसंभवा।
वाभयाद्धिबुध्यभावसादवादिवित्सभा
भासमादिवादभावसाध्यसिद्धिवैभवा ॥

रा.श्री.गु

९. गोमूत्रिकाबन्धः (पृष्ठम् - ४७) अलङ्कारमञ्जरी

विजयींद्रवर्य धुतगर्वधीनिधे
सततादृशास्तव गुणालसत्तमाः ।
निजसांद्रधैर्यजितपर्वतानिशं
समताश्रिता नवमृणालसत्क्रमाः ॥

रा.श्री.गु.

## १०. कुलालचक्रबन्धः (पृष्ठम् - ४७)





नयेन सेवा मनसा धवेन
न वेधसा जय्यमवैहितेन।
न ते हि वैरं मुनिना जवेन
न वेजना किं सरसेन येन॥

रा.श्री.गु

११. कुलालचक्रबन्धः (पृष्ठम् - ४८) मधुधारा




सा भाति यौगींद्रसुगीरया सा
सा यारगीराहत सप्रशंसा ।
सा शं प्रसक्ता भुवने सरासा
सारासनेहामपि यौतिभासा ॥

रा.श्री.गु.

१२. छुरिकाबन्धः (पृष्ठम् - ४९) 




योगभागयिगण्या सा वा शावासा जयौंजसा।
सारसाशयते भासा साभाते यशसारसा॥

रा.श्री.गु.

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| व्र | ती | न | ते | ते | न | ती | व्र |
| ती | र | भा | न | न | भा | र | ती |
| न | भा | व | ना | ना | व | भा | न |
| ते | न | ना | घ | घ | ना | न | ते |

व्रतीनते तेनतीव्र तीरभाननभारती ।
न भावना नावभान तेन नाघघनानते ।।

रा.श्री.गु.

१४. नवरङ्गबन्धः (केवलः) (पृष्ठम् – ५२) 

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| श्री | रा | म | सा | सा | म | रा | श्री |
| रा | जि | सा | र | र | सा | जि | रा |
| म | सा | र | भा | भा | र | सा | म |
| सा | र | भा | स | स | भा | र | सा |

श्रीरामसा सामराश्री राजिसाररसाजिरा ।
मसारभा भारसाम सारभाससभारसा ॥

रा.श्री.गु.

१५. हलबन्धः (पृष्ठम् – ५६) अलङ्कारमञ्जरी




रामावाततवामारा
मारणाररणारमा ।
वारमा शरदायादे
देयादारशमारवा ॥

रा.श्री.गु.

१६. आन्दोलिकाबन्धः (पृष्ठम् - ५७) 




सा जराततरामश्री रामश्रीररसामता।
तामसा रतिदास्यान्मे दास्यान्मेषितराजसा॥

रा.श्री.गु

१७. छत्रबन्धः (पृष्ठम् – ५८) अलङ्कारमञ्जरी




**शीताक्ष्णातावतानीता** सीतापाताद्भुताहिता ।
**नीतिपालनदक्षा सा** साक्षादनलपातिनी ॥

रा.श्री.गु.

१८. अङ्कुशबन्धः (पृष्ठम् – ६६) 




वारणार्वागगर्वाणामारणाद्धततद्घृणा ।
वारमाशरदायादे देयादारशमारवा ॥

रा.श्री.गु.

## श्री लक्ष्मीनरसिंहस्वामिनः

## मुदिगल्



कल्याणगुणपूर्णाय वल्लभाय श्रियस्सदा ।
श्रीमध्वदेशिकेष्टाय श्रीनृसिंहाय ते नमः ।।

श्री व्यासराजप्रतिष्ठितः

# श्री प्राणदेवः

सोवेनहळ्ळी



मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ।।

श्रीमद्वेङ्कटेशसन्निधौ

श्रीमद्राघवेन्द्रगुरुसार्वभौमाः



श्रीमतो राघवेन्द्रस्य नमामि पदपङ्कजे ।
कामिताशेषकल्याणकलनाकल्पपादपौ ॥

# श्रीमद्विजयीन्द्रतीर्थानां बृंदावनम्

## श्री कुंभघोणक्षेत्रम्

(कृतिनायकाः)



भक्तानां मानसाम्भोजभानवे कामधेनवे ।
नमतां कल्पतरवे जयीन्द्रगुरवे नमः ॥

# श्रीमत्सुधीन्द्रतीर्थानां बृन्दावनम्

नवबृन्दावनक्षेत्रम्

(कृतिनिर्मातारः)



कुशाग्रमतये भानुद्युतये वादिभीतये ।
आराधितश्रीपतये सुधीन्द्रयतये नमः ॥

# श्रीमत्सुमतीन्द्रतीर्थानां बृन्दावनम्

## श्रीरङ्गक्षेत्रम्

## (व्याख्याकाराः)



पूर्णप्रज्ञमताम्बोधिपूर्णेन्दुमकलङ्किनम् ।
सुजनाम्बुधिभास्वन्तं सुमतीन्द्रगुरुं भजे ॥

श्री परिमलविद्यामन्दिरसंस्थापकाः

श्रीमत्सुयमीन्द्रतीर्थश्रीपादाः



सुखतीर्थमताब्धीन्दुं सुधीन्द्रसुतसेवकम् ।
सुधापरिमलासक्तं सुयमीन्द्रगुरुं भजे ।।

## श्री परिमलविद्यामन्दिरस्य साम्राट् पोषकाः

## श्रीमत्सुजयीन्द्रतीर्थश्रीपादाः



सुयमीन्द्रकराब्जोत्थं सुविद्याबोधकं सदा।
सुमूलरामपूजाढ्यं सुजयीन्द्रगुरुं भजे ॥

श्री परिमलविद्यामन्दिरस्य
स्थापक–सञ्चालक–सम्पादकः



"श्री राघवेन्द्रगुरुवंशभूषणम्, विद्याधिराजः"

## राजा श्री गुरुराजाचार्यः

xxxxxxx

ग्रन्थप्रकाशनसहायकानां

श्री के. प्राणेशरायमहोदयानां मातरः



धर्मश्री सेतूबायि

॥ श्रीः ॥

हरिः ॐ ॥ श्री वायवे नमः ॥
श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यो नमः ॥

कविसार्वभौमशिखामणि सर्वतन्त्रस्वतन्त्र

श्रीमत्सुधीन्द्रतीर्थश्रीपादविरचिता

# अलङ्कारमञ्जरी

श्रीमत्सुमतीन्द्रतीर्थश्रीपादविरचितया

मधुधाराख्यया
व्याख्यया समलंकृता

## शब्दालङ्कारप्रकरणम्

### मङ्गलाचरणम्

यत्कर्तृकं जगदिदं यदनुप्रविष्टं
यस्मिन् मुहुर्निविशते यदनन्यनाथम् ।
तं प्राणु वीमहि[१] महीतनयाकटाक्ष-
पीयूषवीचिरचिताप्लवमादिदेवम् ॥ १ ॥

स्वदेहाभास्थूलङ्करणकमलादृक्छविभृतं
शिलायास्त्रैणाढ्यङ्करणचरणाम्भोरुहरजः ।
क्षणात् क्षोणी नग्नङ्करणशरघाटो[२] द्भटतरं
महो धन्वि स्तोषीमहि[३] महितनानारसघनम् ॥ २ ॥

१. प्र आङ् उपसर्गपूर्वकः णु स्तुतौ धातुः विधिलिङ् उ.ब. आङि नु प्रच्छ्योरित्यात्मनेपदम् (वा. ९०९).

२. काठ-साट इति पाठान्तरम्.

३. ष्टुञ् स्तुतौ उत्तमपुरुष बहुवचनम् विधिलिङ् आत्मने.

काले व्यत्ययगुरूद्रवन्त्यनवधौ क्वाप्युद्धविष्यन्ति ये
तानत्रोपपरार्धके गणयितुं धातापि नेष्टे कवीन्।
ते प्रत्येकविभिन्नचित्रवचसो यद्बुद्धे शेरते
तां सौख्याय सरस्वतीं नवसरोजाक्षीं जिघाक्षीमहि[1] ॥ ३ ॥

धन्यास्ते परमूर्धन्या विजयन्ते महागवीम्।
संख्यावद्वरगोसंख्या दुहानाः कवितासुधाम् ॥ ४ ॥

अन्तेवासिभिरन्तरन्धतमसापन्नाशिनी शासिनी
कान्तिर्बन्धुभिरीक्षितामृतझरी काकोलधारा परैः।
गुञ्जन्मञ्जुलकञ्जभूसहचरीमञ्जीरशिञ्जारण-
त्प्रौढाटोपचपेटपातनपटुः सौधीन्द्रवाग्धोरणी ॥ ५ ॥

प्राचामुपाचामदलंक्रियाप्तवाचामनीचानि मतामृतानि।
सुधीन्द्रयोगी तदिदंकृतालंक्रियागमं न स्पृहयन्ति के वा ॥ ६ ॥

श्रीसुमतीन्द्रयतीन्द्रो [2]व्यतनोदतनीयसीमसीमगुणाम्।
व्याख्यां मधुधाराख्यां विवृतालङ्कारमञ्जरीहृदयाम् ॥ ७ ॥

आस्माकी सुकविमुदे स्यात्तदलङ्कारमञ्जरीविवृतिः।
मधुधाराख्या पङ्कजसौरभलक्ष्मीरिवालिहर्षाय ॥ ८ ॥

अथेदानीं तत्रभवान् सुधीन्द्रयतिकवीन्द्रः 'काव्यं यशसेऽर्थकृते' 'काव्यात् पूजायशोलाभः' — इति काव्य[3]प्रकाशकाव्यदर्पणादिग्रन्थकारोक्तानेकप्रयोजन-जालफलेग्रहिनिर्माणस्य काव्यस्य शब्दैकप्रधानत्वात् प्रभुसंमितेभ्यो वेदेभ्यः, केवलार्थप्रधानत्वात् सुहृदुपदेशसंमितेभ्य इतिहासपुराणादिभ्यश्च कान्तासंमिततयोपदेशवैलक्षण्यात् कविसमयानुरोधेन चारुत्वातिशयहेतुत्वाच्च सहृदयहृदयाह्लादिनोऽलङ्कारान् संगृह्य विवक्षुः ग्रन्थादौ शिष्टाचारपरम्परागतं निजेष्टदेवतावन्दनरूपं निरन्तरायाद् ग्रन्थसमाप्त्यर्थं मङ्गलमाचरति— वन्देमहीति।

१. गाहू विलोडने सन्, विधिलिङ्, उ.ब.
२. व्यतनोत् इति पाठान्तरम्.
३. काव्यदर्पणप्रकाशिकादीति पाठः.

# श्रीमत्सुधीन्द्रतीर्थविरचिता अलङ्कारमंजरी

**वन्देमह्यनिशं निजाङ्कविलसन्नीरेरुहाक्षी[१] मणी-**
**जाग्रद्गात्ररुचिं विहङ्गपरिणीव्यूढांसरूढासिकम्।**
**तं कञ्चिन्महिमानमुज्ज्वलपदाम्भोजद्वयीध्यायिनः।**
**सर्वार्थानपरोक्षयत्यतितरां यस्य स्मृतिर्वाञ्छितान् ॥ १ ॥**

तं प्रसिद्धं कञ्चिन्महिमानं महत्त्वं वन्देमहीति सम्बन्धः। कीदृशं निजाङ्के स्ववक्षसि, 'अङ्कं चिह्नेऽन्तिकोरसोः' इति वैजयन्ती। विलसन्त्या प्रकाशमानया नीरेरुहाक्षीमण्या स्त्रीश्रेष्ठया, कमलयेत्यर्थः। यद्वा द्वन्द्वोऽयम्, निजाङ्कयोः निजोत्सङ्गवक्षसोः विलसन्तीभ्यां नीरेरुहाक्षीमणीभ्यां लक्ष्मीकौस्तुभाभ्यामित्यर्थः। जाग्रती भृशं रोचमाना गात्ररुचिः शरीरशोभा यस्य तम्। गौरशोणवर्णाभ्यां लक्ष्मीमणिकान्तिभ्याम् इन्द्रनीलनीलत्वात् परभागलाभेन देदीप्यमानदेहशोभमिति भावः। पुनः कीदृशम्? विहङ्गपरिण्यः पक्षिराजस्य गरुडस्य व्यूढांसे दृढतरस्कन्धे रूढा कल्पिता आसिका आस्थिति र्यस्य तम्। कञ्चिदनिर्वचनीयम् इत्थमियानिति स्वरूपपरिमाणाभ्यां दुर्निर्वचं महिमानं वन्देमहि स्तुयाम नमस्कुर्यामेति वा। प्रार्थने लिङ्। महिमानमित्यनेन विशेषणद्वयसामर्थ्यात् नारायणो लक्ष्यते। तेन तस्य लोकोत्तरानन्तमहिमता व्यज्यते। अत्र नामानुक्त्वा[२] वैदग्ध्यात् तत्प्रकटनात् उक्तिर्नामार्थगुणः। तदुक्तम्— 'अनुक्ते नाम्नि वैदग्ध्यादुक्तिः प्रत्यायनास्य चेत्' इति। अत्र पर्यायोक्तमलङ्कारः। तथा च लक्षयिष्यति— 'पर्यायोक्तं भवेदन्यभङ्ग्या प्रस्तुतवर्णनम्। दयारसैरभ्यषिञ्चद्यः सुधीन्द्रमिमं नुमः॥' इति। पुनस्तमेव विशिनष्टि। यस्य हरेरुज्ज्वलपदाम्भोजद्वयीध्यायिनः शोभनपादारविन्दद्वन्द्वध्यान-शीलस्य पुरुषस्य सम्बन्धिनी स्मृतिः[३] स्मरणं वाञ्छितान् विवक्षितत्वेन लिप्सितत्वेन वा अभीष्टान् सर्वार्थान् अतितरामपरोक्षयति करबदरवत् भृशं प्रत्यक्षीकरोति। यस्मिन् प्रसन्ने सति तदुपासकानां पुरुषाणां समस्तजगतीवस्तुजातं पुरुषार्थजातं वा दृष्टं भवतीत्यर्थः। 'किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने' इत्युक्तेरिति भावः। अत्र निजाङ्कविलसदित्यादिविशेषणेन लोकोत्तरशृङ्गारिणो-

---

१ मणिर्द्वयोः, कृदिकारादाक्तिनः इति ङीष्. २. नामानुक्त्या इति पाठः।
३. पुरुषकर्तृका स्मृतिरिति यावत्।

र्लक्ष्मीनारायणयोरालम्बनविभावत्वादसंलक्ष्यक्रमध्वनिः । संभोगशृङ्गारो व्यज्यते । जाग्रद्गात्ररुचिमित्यनेन आलम्बनगुणः उद्दीपनविभावः मणिशब्देन तदलङ्करणमुद्दीपनविभावश्च । विहङ्गपरिणीत्यादिविशेषणेनासुरसंहारसत्राहादुत्साहोपचयरूपो वीरो रसश्च । तद[१]त्रानयोस्संसृष्टिः । 'ग्राह्ये भेदे[२] तु संसृष्टिरग्राह्ये सङ्करः स्मृतः' इत्युक्तेः । उत्साहस्य च लक्ष्मीहर्षपोषकत्वे तु शृङ्गारं प्रत्यङ्गत्वाद्रसवदलङ्कारः । हरिविषयरतिभावं प्रति शृङ्गारवीरयोरङ्गत्वाद्वा रसवदलङ्कारः । 'रसो यत्रापरस्याङ्गं रसवत् तत् प्रकीर्तितम्' इति वचनात् । इह वीरशृङ्गारयोर्वर्णनात् सर्वप्रतिभटविद्वज्जयो रसिकहृदयाह्लादनं चास्मिन् प्रबन्धे कवेश्चिकीर्षितमिति भासते । अत्र वाच्यो हेतुरलङ्कारः । सर्वार्थप्रत्यक्षीकरणरूपकार्येण भगवत्पादाम्बुजध्यानरूपहेतोर्वर्णनात् । 'हेतोर्हेतुमता सार्धं वर्णनं हेतु[३]रुच्यते' इति लक्षणम् । 'असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम्' इत्युदाहरणम् ॥

अथ चिकीर्षितस्य प्रबन्धस्य नामधेयं नायकञ्च निर्दिशन् स्वप्रबन्धस्य प्रेक्षावदुरीकरणीयतां दर्शयति—

**अधिकृत्यास्मदाचार्यान् विजयीन्द्रयतीश्वरान् ।**
**प्रवृत्तेयमनुग्राह्या मूर्ध्नालङ्कारमञ्जरी ॥**

विजयीन्द्राख्यान् यतीश्वरान् अस्मदाचार्यान् अधिकृत्य उदाहरणस्य विषयीकृत्य इयमलङ्कारमञ्जरी अलङ्काराणामनुप्रासोपमादीनां मञ्जरीव मञ्जरीत्यन्वर्थेयं संज्ञा । रसमाधुर्यसौरभ्यादयो गुणा यथा मञ्जर्यां वर्तन्ते तथेहापीति मञ्जरीशब्दं प्रयुञ्जानस्याशयः । सा प्रवृत्ता मया प्रतिपादिता । वृतेरन्तर्णीत[४]ण्यर्थात् कर्मणि क्तः । मूर्ध्ना अनुग्राह्येत्यर्थः ।

अलङ्कारमञ्जरीत्युक्तम् । तत्र कोऽयमलङ्कारो नामेति जिज्ञासायामलङ्कारसामान्यं लक्षयन् विभजति— **अलङ्कुर्वन्तीति ।**

**अलङ्कुर्वन्त्यङ्गसङ्गात् स्वतः प्रायो रसस्य ये ।**
**हारादिवत्तेऽलङ्कारा द्विधा शब्दार्थसंश्रयात् ॥**

१. तदनयोः संसृष्टिः इति पाठः ।
२. भेदेऽपि इति पाठः ।
३. हेतुरिष्यते इति पाठः ।
४. अन्तर्निहितण्यर्थात् इति पाठः ।

ये अनुप्रासोपमादयः अङ्गयोः शब्दार्थयोः सङ्गात् संयोगात् संयोगं प्राप्येति ल्यब्लोपनिमित्ता पञ्चमी । तेन संयोगवृत्त्यैव रसोपकारकत्वलाभेन समवायवृत्त्या तदुपकारकेषु गुणेषु नातिव्याप्तिः। न च शब्दार्थौ नाङ्गम् 'शब्दार्थौ मूर्तिराख्याता'विति विद्यानाथोक्तेरिति वाच्यम्। करचरणोभयवृत्तितेव मूर्तेः शब्दार्थोभयवृत्तिता काव्यशरीरस्येति प्रत्येकमङ्गत्वो[१]पपत्तेः। अङ्गशब्दाच्च सन्दर्भसंश्रयणेन चारुतातिशयहेतुरीतिप्रभृतिव्यवच्छेदः। प्रायोऽलङ्कुर्वन्तीत्युक्त्या विद्यमानेऽपि रसे क्वचिदनुपकारकत्वं, प्रायस्सत इत्यपि सम्बन्धाद्रसाभावेऽपि चित्रप्रतिमादाविव क्वचिद्वैचित्र्यमात्रपर्यवसायित्वम् ।

विद्यमानेऽपि रसेऽनुपकारकत्वं यथा—

दम्भोलिभृद्भयविजृम्भणसंभ्रमोद्य-
द्रम्भादिलम्भितसडम्भनविभ्रमेण ।
गाम्भीर्यगुम्भनमलम्भि न यस्य दम्भं
योगीन्द्रसंयमि[२]वरेण समाः क्व तेन ॥

दम्भोलिभृतः इन्द्रस्य भयविजृम्भणात् सम्भ्रमेणोद्यन्तीभिः रम्भादिस्त्रीभिः लम्भितेन सडम्भनेन आरोपितेन विभ्रमेण विलासेन यस्य योगीन्द्रस्य गाम्भीर्यगुम्भनं गाम्भीर्यबन्धः दम्भं मिथ्यात्वं नालम्भि न प्रापितम्। अत्र प्रमदाजनविलासादिदर्शननिमित्तकधैर्यशैथिल्याभावप्रतिपादनेन रम्भादि-विलासशिथिलीकृतधैर्येभ्यो विश्वामित्रादिभ्योऽप्यतिशयेन निर्विकारत्वात्, शान्तरसे विद्यामानेऽप्यनुप्रासो नोपकारकः, परुषबन्धत्वेन विरोधित्वात् ।

रसाभावेऽपि वैचित्र्यमात्रपर्यवसायित्वं यथा—

अनुसरति तपस्यामागृहीतोऽपि लक्ष्म्या
समनुपतति शान्तिं श्रद्धयालिङ्गितोऽपि ।
अपि कथमनुरुन्धे हन्त योगीन्द्रमौनी
सरसमपि कलास्ता दक्षिणछ्लाघवासौ ॥

---

१. अङ्गपदोपपत्तेः इति पाठः.

२. योगीन्द्रसंयमिवरेण. अत्र श्रीराघवेन्द्रतीर्थशिष्यभूताः योगीन्द्रतीर्था गृहीता इति मन्तव्यम् ।

अत्र आजन्म लक्ष्मीवतः तपस्याश्रद्धालोः शान्तिरिति विरोधः। एतासामनुसरणेऽपि पुनः कलानामनुसरणं विरुद्धमपि दक्षिणत्वादुपपद्यते इति दक्षिणनायकवृत्तान्तप्रतीतेः स्फुटं प्रतीयमाना समासोक्तिः वैचित्र्यमात्रपर्यवसन्ना। यतीश्वरस्य शृङ्गाररसविरोधितया तदालम्बनविभावत्वाभावेन शृङ्गाररसस्याभावात्।

यत्तु विद्यानाथेनोक्तम्— 'अलङ्कारैरवयवगतैरवयविकाव्यमेवोपस्क्रियत' इति तत्र काव्यशब्दस्य रस एवार्थः। यदाह वीरनारायणः—

**प्रायः सतोऽङ्गद्वारेण ये रसस्योपकारकाः।**
**तेऽलङ्काराः समाख्याताः कटकाद्या इवात्मनः॥ इति।**

यथा हारादयो ग्रीवाद्यवयवसंयोगेन तच्छोभातिशयसंपादनद्वारा अवयविनः शोभां कुर्वन्ति, तद्वदनुप्रासोपमादयोऽपि स्वसंयोगेन रसमुपकुर्वन्तीत्यलङ्कारा' इत्युच्यन्ते इति हारादिवत्तेऽलङ्काराः इत्यस्यार्थः। तान् विभज्य दर्शयति— 'द्विधाशब्दार्थसंश्रयात्' इति। शब्दमात्राश्रयत्वादनुप्रासादयः शब्दालङ्काराः, अर्थमात्राश्रयत्वादुपमादयोऽर्थालङ्कारा इत्यर्थः।

अथ शब्दमात्राश्रिताः शब्दालङ्काराः इति लक्षितान् शब्दालङ्कारान् विभजन्नुद्दिशति—

**अनुप्रासोऽथ यमकामाभासः पुनरुक्तवत्।**
**चित्रं वक्रोक्तिका श्लेषाः शब्दालंकृतयस्तु षट्॥** इति।

तत्र प्रथमोद्दिष्टमनुप्राससामान्यं लक्षयति—

**एकद्वित्र्यादिवर्णानां साम्येऽनुप्रास इष्यते।**

साम्यमावृत्तिः। स्पष्टमन्यत्। स च वृत्त्यादिरूपेण बहुविध इति हृदि निधाय **वृत्त्यनुप्रासं** लक्षयित्वोदाहरति—

**वृत्त्यनुप्रास एकस्याप्यावृत्तिरसकृद्यदा।**
**विजयीन्द्रो विलोलाक्षीवीक्षणाक्षतहृत् क्षितौ॥**

नियतवर्णगतो रसविषयो व्यञ्जनाख्यव्यापारो वृत्तिः। सा कैशिकी भारती आरभटी चेति त्रिविधा। ता एवोपनागरिका कोमला परुषा चेति क्रमादुच्यन्ते। तत्र

कोमलायाः ग्राम्येति नाम्ना व्यवहारो दृश्यते। सोऽयं वर्णव्यापारोऽस्मिन् वर्णरचनात्मके कविव्यापारे वर्तते इत्युपचाराद्वर्णरचनापि वृत्तिरित्युच्यते। तद्गतो रसाद्यनुगतेः प्रकृष्टः अव्यवहितः आसः विन्यासः अनुप्रासः वृत्त्यनुप्रासः। एकस्य व्यञ्जनस्य, अपिशब्दादनेकव्यञ्जनस्यापीति समुच्चीयते। अनेकव्यञ्जनस्य द्विर्बहुकृत्वो वा आवर्तनं पुनः पुनरभिधानं वृत्त्यनुप्रास इति ग्रन्थान्तरोक्तेः। तथाच **विद्याचक्रवर्ती**– एकस्यानेकस्य च व्यञ्जनस्य मुहुः साम्यं वृत्त्यनुप्रास इति। भूमौ विजयीन्द्रो विलोलाक्षीणां विलासिनीनां वीक्षणेनाखण्डितमानस इत्युदाहरणेऽपि विशब्दस्यैकस्य क्षशब्दव्यञ्जनद्वयस्य च बहुधाऽऽवृत्तिः स्फुटा। अत्रायमेव वनितावशंवदो न भवतीति वस्तु क्षितिपदेन व्यज्यते। ततो वस्तुना वस्तुध्वनिरयं पदगतः। शान्तरसः शमस्थायिकः।

"वैराग्याद्यैः शमो नाम निर्विकारमनस्कता।" शिष्याणां बुद्धिवैशद्यायानेकव्यञ्जनावृत्तावपि वृत्त्यनुप्रासं दर्शयितुमुदाहरणान्तरमाह—

**वदावद[१] बुधावलीवलितशास्त्रशस्त्रच्छटा**
**हठोदितकठोरगीर्झरकिरे जयीन्द्रे मनः।**
**कटुस्फुटरटद्भटोद्भटनिशाट[२] झाटाटवी**
**कुठारशरवापिनं कमपि चापिनं गाहते॥**

अत्र प्रतियोगिवावदूकविद्वत्समूहप्रवर्तितकठिनतरशास्त्रकल्पशास्त्रसमूहस्य हठोदितेन सहसा वचनेन कठोरस्य वाक्प्रसारस्य किरे विक्षेपके प्रवर्तयितरि विजयीन्द्रे अभ्यर्हितत्वादस्मदीयं मनः कटु क्रूरं स्फुटं प्रकाशं च यथा तथा (रटद्भिः) नदद्भिर्भटैरुग्रस्य राक्षससमूहस्यैव वनस्य कुठारभूतान् – शरान् वपति बीजवत् किरतीति तथा, तं कमपि चापिनं कोदण्डपाणिं रामं गाहते – इति श्लोके वदावदेति द्विरावृत्तिः। विदावलीति पाठे त्रिरावृत्तिः। अत्र स्मृत्यनुप्रासयोः संसृष्टिः। यथा वा—

**आमन्द्रयोगीन्द्रमृगेन्द्रनादप्रसान्द्रसान्द्राविणवीततन्द्राः।**
**त्वङ्गन्ति भङ्गादरिसूरितुङ्गा रिङ्खत्कुरङ्गाश्छलदन्तरङ्गाः॥**

गम्भीरतर योगीन्द्रसिंहरवेण प्रसान्द्रे सान्द्राविणे सम्भूयपलायने वीततन्द्राः अरिसूरितुङ्गाः अरिविद्वच्छ्रेष्टा एव रिङ्खन्तः चपलाः कुरङ्गाः चलमनसः भङ्गात्—

१. विदावली इति पाठः। २. झाटः पोदे। झाड इति (हिन्दी) भाषायाम्।

पलायनात् त्वङ्गन्ति कम्पन्ते, इति अत्रानुप्रासो भयानकस्योपकारकः। 'रौद्रसन्दर्शनाद्यैः स्यादनर्थाशङ्कनं भयम्। व्याघ्रादिवीक्षारण्याद्यावेश-युद्धादिहेतुकम् ॥ प्रणामकान्दिशीकत्वाद्यनुभावोपलक्षितम्। विषादचापलावेग-मोहादिव्यभिचारिकम् ॥' अत्रालम्बनमन्यविद्वांसः। अत्र रूपकमलङ्कारः।

अथ छेकानुप्रासं लक्षयति-

**छेकानुप्रासनामासौ द्विर्व्यञ्जनयुगोक्तितः।**

व्यञ्जनयोर्हलोर्युगस्य द्वयस्य अव्यवधानाद् द्विरुक्तिः छेकानुप्रासः। उदाहरति—

**विभाति भातिसौजन्यजन्या भुवि जयीन्द्र ते।**

हे विजयीन्द्र ते तव अतिसौजन्यजन्या कीर्तिरूपा भा कान्तिर्विभाति। अत्र छेकाः विदग्धाः। तत्संमतोऽनुप्रासश्छेकानुप्रास इति साहित्यसाम्राज्यादौ। छेकाः गृह्यकाः पक्षिमृगा इति केचित्। यद्यपि भूपालीये[१] द्वयोस्त्रयाणां वा वृत्तिश्छेकानुप्रास इत्युक्तम्। न चैवं यमकेऽतिप्रसङ्गः। अनियताच्कानामावृत्तौ छेकानुप्रासः, नियताच्कानामावृत्तौ यमकमिति भेदस्य स्पष्टत्वात्। उदाहृतं च—

'गलोद्गलदसृग्भारेण भूरेणवः' तत्र तु द्विर्व्यञ्जनयुगोक्तित इत्युक्तम्। तथापि युगेत्येतत् प्रायिकाभिप्रायम्। युगशब्दः समुदायपरो वा। तथाच चिन्तामणौ—

**'सकृत्सारूप्यमन्योन्यं यद्वर्णसमुदाययोः'। इति।**

वृत्त्यनुप्रासे बहुधानेकवर्णावृत्तिः। छेकानुप्रासे द्विरेवेति नास्ति लक्षणसाङ्कर्यम्। अत्रापि भाति भातीति भकारतकारयोः जन्यजन्येति जकारनकारयकाराणामावृत्तिः। अत्रापि शान्तो रसः। सौम्यदृष्टित्वादिरनुभावः, धैर्यादिः सञ्चारिभावश्च सौजन्यपदेन व्यज्यते। यथा वा—

**गोष्ठीं नह्यत न ह्यतः खलु हतिर्वाचाटतां चाटतां**
**मा च त्वङ्गत भङ्गतः किल कलौ स्यात त्वराजित्वराः।**

१. रघुनाथ भूपालीये

**अभ्यस्तं च यशस्त्रशस्त्रवदुपादद्ध्वं व्युदध्वं श्रुतं**
**रौडन्तीत्यभियाभियाति सुधियो योगीन्द्रमन्द्रोक्तयः ।।**

हे प्रतिवादिनः गोष्ठीं सङ्गं बध्नीत। तावता वाचालभावं चारतां भजतां नास्माकं हतिः क्षतिः। यूयं च भङ्गतः पराजयात् भङ्गो भवतीति मा त्वङ्गत मा वेपध्वम् कलौ वाग्युद्धे जित्वराः जयशीलाः स्यात। किलेत्यपरमार्थे। यशस्त्रं त्रायतेः कः। कीर्तिरक्षकं शस्त्रमिव प्रतिभटभयङ्करं यदभ्यस्तं व्युदध्वं व्युत्क्रान्तमार्गम्। 'उपसर्गादध्वनः' इति अच्, न लोपः। तत् श्रुतं शास्त्रं उपादद्ध्वं गृह्णीत। इत्येवं योगीन्द्रगम्भीरोक्तयः, अभियातिसुधियः अरिविबुधान् रौडन्ति अवहेडन्ते। रौड़ "अनादरे"। किल कलावित्यत्र द्वयोर्व्यञ्जनयोर्नह्यत न ह्यतेत्यादौ त्रयाणां चावृत्तिः। अत्र उत्साहस्थायिके त्रिविधे वीररसे युद्धवीरः। तदुक्तम्—

**"तत्रालम्बनमाख्यातं युद्धवीरस्य शत्रवः।**
**यथार्हालम्बनस्तत्तद्गुणवागादिदीपितम् ।।**
**प्रसन्नमुखरागाद्यैरनुभावैः प्रकाशितम्।**
**औत्सुक्यचिन्ताहर्षाद्यैः पोषितः सहकारिभिः ।।**
**धीरोदात्ते य उत्साहः स वीरो रस इष्यते।**
**दानवीरो दयावीरो युद्धवीरश्च स त्रिधा ।।" इति।**

अथ **लाटानुप्रासं** लक्षयन्नुदाहरति—

**लाटपूर्वस्तु शब्दार्थाभेदे तात्पर्यभेदतः।**
**श्रुतं श्रुतं ते शिष्याणां श्रीजयीन्द्रमतिर्मतिः ।।**

प्रकरणादनुप्रास इति वर्तते। लाटशब्दपूर्वः स लाटानुप्रासः। शब्दार्थयोरभेदेऽपि तात्पर्यभेदात्, उद्देश्यविधेयभावाभिसन्धिभेदादित्यर्थः। लाटजनोपलालितत्वाल्लाटानुप्रासः। शब्दपौनरुक्त्यमात्रं यमकेऽपीत्यर्थपदम्। शब्दार्थपौनरुक्त्यं कथितपदत्वादिरूपदोषसाधारणमित्यतस्तात्पर्यभेदत इत्युक्तम्। हे जयीन्द्र ते शिष्याणां श्रुतं श्रुतम्। अत्र प्रथमश्रुतशब्देन शास्त्रसामान्यमुद्दिश्य द्वितीयेन श्रुतशब्देन श्रुतत्वं तस्य विधीयमानमन्येषां श्रुतस्य श्रुतत्वनिषेधपर्यवसायि, तत्रैव तात्पर्यात्। एवं तव मतिरेव मतिः, यथा शिष्याणां श्रुतस्य उत्कर्ष इति लाटानुप्रासशब्दितशब्दालङ्कारोपस्कृतव्यञ्जनतात्पर्यपर्यवसान-

सीमशिष्यशास्त्रोत्कर्षरूपहेतुमत्सहितस्य गुरुमतिरूपहेतोर्वर्णाढ्येतुमदलङ्कारः । ततश्च शब्दार्थालङ्कारयोः संसृष्टिः ।

उदाहरणान्तरमाह—

**जनुर्जनुरनारतं जगति चातुरी चातुरी**
**मतिर्मतिरखण्डिता सदसि मौखरी मौखरी ।**
**कृतिः कृतिरितो जनाः शृणुत पाण्डितीं पाण्डितीं**
**जयीन्द्र विजयीन्द्रसच्चरितवन्दि कर्मन्दिनाम् ॥**

अस्यार्थः— अनारतं जयशील, विद्वद्वौरेय, विजयीन्द्र, शोभनचरित्रश्लाघिनां'[१] कर्मन्दिनां मादृशानां पाराशरिणां, जनुर्जन्मैव जन्म, अन्येषां तु जन्म संख्यार्थमिति भावः । तथा तेषां चातुरी विद्याकौशलं सैव चातुरी, तस्या एव प्रकृष्टप्रयोजनभूतनिःश्रेयससाधनत्वात् अन्येषां विद्याशिल्पनैपुणमिति भावः । तथा तेषामखण्डिता मतिरेव मतिः नान्येषां, वाचोयुक्तिविमर्दासहत्वेन खण्डितत्वात्, तथा सदसि तेषां मौखर्यैव मौखरी वाचालता, नान्येषां, असकृत्पाठित-कतिपयवागवसानविनाशित्वात् । तथा तेषां कृतिरेव कृतिः, गद्यपद्यात्मक-काव्यबन्धः सुभद्रापरिणयादिः । नान्येषां तत्तद्रसालङ्कारोचितरचना- वैदग्ध्याभावात् हे जनाः तेषामेव पाण्डितीं 'विवक्षितार्थनिर्वाहः पाण्डित्यं सर्वगोचरम्' इत्युक्तं पाण्डित्यमेव पाण्डितीं शृणुत । कौतुकेन श्रवणपथातिथी कुरुत । इतः अत्र कृतौ ।

अहो जनाः इत्यपि क्वचित्पाठः । काव्यदर्पणकारस्तु तमिमं लाटानुप्रासं 'वाक्यावृत्तौ पदावृत्तौ नामावृत्तौ च स त्रिधा' इति त्रिधा विभज्य—

**'त्वयि प्रसन्ने देवेश'[२] किमेभिरगुणैर्मम ।**
**'त्वय्यप्रसन्ने च विभो'[३] किमेभिश्च गुणैर्मम ॥'**

इति वाक्यावृत्तिर्लाटानुप्रासः ।

**'वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः ।**
**सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ॥'**

१. स्ताविनाम् इति पाठः		२. किममीभिर्गुणैर्मम
३. देवेश किममी भिर्गुणैर्मम इतिपाठान्तरम् ।

इति पदावृत्तिलाटानुप्रासः ।

**'समासैक्येऽपि तद्भेदे ससमासासमासयोः ।**
**नाम्नस्साम्ये पुनर्लाटानुप्रासस्त्रिविधो भवेत् ॥'**

इति तृतीयमपि त्रेधा विभज्य

**'सुधासुधाकरमहो महोभरनिधे यशः ।**
**त्वय्येरास्ते शौर्यलक्ष्मीर्लक्ष्मीर्लक्ष्मीरपि कुलगता ॥'**

इत्याहत्य समासे प्रातिपदिकावृत्त्या समासभेदे प्रातिपदिकावृत्त्या समासासमासयोः प्रातिपदिकावृत्त्या इत्यमुं पञ्चविधमप्युदाहृतवान् । आकरे तु सामान्यमेवोक्त्वा शिष्यैरूह्यमिति भेद उपेक्षितः । तत्र वाक्यावृत्त्या लाटानुप्रासो यथा—

**राम त्वदीयांघ्रिसरोजभाजां न काङ्क्षणीयं भुवनेषु किञ्चित् ।**
**त्वपादपाथोजमनाश्रितानां न काङ्क्षणीयं भुवनेषु किञ्चित् ॥**

अत्र पूर्ववाक्ये श्रीरामपादाम्बुजं प्रपन्नानां निरतिशयानन्दानुभवप्राप्त्या तदन्येषां त्रिलोकीगतवस्तूनां तुच्छत्वादनाकाङ्क्षणीयता । भगवत्पादानाश्रितानां तु न किञ्चिदप्याकाङ्क्ष्यम् अतिदुर्लभत्वादिति वाक्यमेव तात्पर्यभेदादावर्त्यते ।

पदावृत्त्या यथा—

**दया दया या समसीसरत्त्वां शराश्शरास्तेऽब्धिमनीनमन्ये ।**
**व्रतं व्रतं ते यदृषीनपासीत् सीतेश वीर्याद्भुत रामदेव ॥**

'वंदनं वरवर्णिन्याः' इति दर्पणोदाहरणेषु उत्कर्षहेतुवाचकपदं नास्ति, अत्रत्वस्तीति भेदः । समासे नामावृत्त्या यथा—

**निशानिशाटाहवनिश्चलक्षणक्षणप्रभाभाशुगदीप्तदिङ्मुखः ।**
**नभोनभोगामिततेः पृणन्मनो मनोरथान् रक्षतु राक्षसान्तकः ॥**

निशायां निशाटाहवे राक्षसयुद्धे निश्चलाश्चलनक्रियारहिताः, क्षणं क्षणप्रभा विद्युत् । कालाः, अत्यन्तसंयोगे च (२-१-२८-२९), इति समासः तस्याः आमा येषां तैराशुगैर्बाणैर्दीप्तानि प्रकाशितानि दिङ्मुखानि येन सः । युद्धालोकनार्थं नभसि

विद्यमाना नभोगामिनो देवास्तेषां ततः समूहस्य मनो मनोरथान् मनसि विद्यमानमनोरथान् पृणन् पूरयन् रामो रक्षतु इति। अत्र समासैक्ये निशादिप्रातिपदिकावृत्तिः।

समासभेदे नामावृत्त्या यथा—

अनुपहतलसद्वाग्वाग्यतानन्यसूरीन्
विदधदविगतश्रीः श्रीधरैकान्तभक्तः।
जितपर सुमतो धी[१]र्धीधृताशेषशास्त्रो
जयति भुवि सुधीन्द्रः कोऽपि योगीन्द्र एषः॥

स्वयमनुपहतलसद्वागेव अन्यसूरीन् प्रतिवादिनो वाग्यतान् प्रतिहतवाचः कुर्वन् अविगतश्रीः अनपायि विद्यादिसम्पत्, श्रीधरे विष्णावेकान्तभक्तः। जिता अवमता परसुमनसां विमतविदुषां धीर्येन सः इत्यादि स्पष्टम्।

समासासमासयोर्यथा—

त्वय्येवास्ते महोभूमा भूमा च श्रीयशोधियाम्।
त्वदायत्तैव विद्याश्रीः श्रीश्च योगीन्द्रसेविनाम्॥

योगीन्द्र! त्वय्येव महसां तेजसां भूमा प्राचुर्य श्रीयशोधियां च, सेविनां श्रितानां विद्या श्रीस्त्वदायत्ता सम्पच्चेति समासासमासयोरियं नामावृत्तिः। अत्र यद्यपि—

काशाः काशा इवाभान्ति सरांसीव सरांसि च।
चेतांस्याचिक्षिपुर्यूनां निम्नगा निम्नगा इव॥

इत्यादाव[२]नन्वय्युदाहरणेऽप्यस्तिशब्दार्थयोः पौनरुक्त्यं तथापि तत्र तस्यानुषङ्गिकत्वमेव। न हि तत्र तेनैव शब्देन तदर्थप्रतिपादनं कर्तव्यमिति नियमः। काशाः शरा इवेत्यपि वक्तुं शक्यत्वात्। एवं चान्योन्यसव्यपेक्षेण शब्दार्थपौनरुक्त्येन व्यवस्थिततया भिन्नविषयस्य लाटानुप्रासस्य 'युद्धेऽर्जुनोऽर्जुन इव' इत्यादावनन्वयेन सह न सङ्करः। यदाह—

---

१. सुमनो धीरादृताशेष— इति पाठः। २. अनन्वयोदाहरणे — इति पाठः।

**'अनन्वये तु शब्दैक्यमौचित्यादानुषङ्गिकम्।**
**अस्मिंस्तु लाटानुप्रासे साक्षादेव प्रयोजकम्॥' इति।**

नन्वेवं 'अत्राब्जपत्रनयने नयने निमील्य' इत्यादौ। प्रकृतितदर्थयोः पौनरुक्त्येऽपि प्रत्ययतदर्थयोरपौनरुक्त्यात् लाटानुप्रासोऽयं न स्यादिति चेन्न। बहुतरशब्दार्थपौनरुक्त्यसत्त्वेन प्रत्ययार्थपौनरुक्त्याभावेऽपि लाटानुप्रासत्वस्यानपायात्।

अथ **यमकं** लक्षयति—

**यमकं बहुवर्णानां साच्कानां द्विःसमीरणम्।**
**विजयीन्द्रो जयीन्द्रोऽयं चञ्चलाक्षी चलाक्षिभिः।**
**मनोभवाधीनमना न मनागपि यद्भुवि॥**

साच्कानां सस्वरकाणां बहूनां वर्णानामव्यवधानेन द्विः समीरणम् अनेकधोच्चारणं यमकम्। स्वरव्यञ्जनसमुदायपौनरुक्त्यं यमकमिति। न चैवं छेकानुप्रासेऽति [१]प्रसङ्गः। साच्कानामित्यस्य नियताच्कानामित्यर्थत्वे [२]नैतन्निवारणात्। अत एव 'भारेण भूरेणवः' इत्युदाहरणम्। अत्र बहुपदेनैवाति व्याप्तिर्निरस्तेति चेत्, तन्न। द्वयोस्त्रयाणां वा व्यञ्जनानामावृत्तिः छेकानुप्रास इति बहुग्रन्थेषु दृष्टत्वात्, द्विरित्यस्याविवक्षितार्थत्वात्। नापि लाटानुप्रासेऽतिव्याप्तिः। तत्रार्थपौनरुक्त्यस्य नियतत्वात्। अत्र तदभावः। अत एव 'साहित्यसाम्राज्ये' अर्थपौनरुक्त्यराहित्ये सतीति विशेषणं दत्तम्। स प्रसिद्धो विजयीन्द्रो जपिनां जयशीलानामिन्द्रः प्रभुः यद् यस्माच्चञ्चलाक्षीणां चलैरक्षिभिः मनागीषदपि मनेभवाधीनमनाः कामवश्यहृदयो न भवति। अत्र काव्यलिङ्गमलङ्कारः। सर्वलोकजित्वरकामजिष्णुत्वं मनोभवाधीनमना न भवतीति वाक्यार्थेन समर्थितम्। 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमलंक्रिया' इति लक्षणात्। अत्र पादमध्ये पादद्वयसन्धौ च यमके क्रमात् सार्थस्यानर्थकस्य च समुदायद्वयस्यावृत्तिर्दर्शिता।

उदाहरणान्तरमाह—

**मनसि मनसिजाहंकारहुंकारदान-**
**प्रविदितविदि तत्त्वध्यायिनी वैजयीन्द्री।**

---

१. छेकानुप्रासेऽतिव्याप्तिः    २. मित्यर्थेन तन्निवारणात्।

**जयति नियतिराशाकल्पिताकल्पितार्था**
**कविनृपतिवरेण्यानन्तरायान्तरा या ॥**

कामगर्वधिक्कारदानप्रसिद्धबोधे मनसि तत्त्वध्यायिनी अध्यात्मचिन्ताशीला आशासु दिक्षु आकल्पिता आकल्पीकृता, आकल्पोऽलङ्कारस्तस्मात् तत्करोति ण्यन्तात् कर्मणि क्तः। कल्पितार्था शास्त्रेषूचितार्थकल्पनसमर्था वैजयीन्द्री विजयीन्द्रसम्बन्धिनी या नियतिर्नियमः अनन्तरायान्तराया अन्तरायो विघ्नः अन्तरं व्यवधानं विच्छेदः ताभ्यां रहिता (न विद्येते अन्तरायान्तरे यस्याः सा) अप्रतिबद्धा अविच्छिन्ना चेत्यर्थः। कविनृपतिभिः कविश्रेष्ठैः कविभिः भूपैश्च वा वरेण्या श्लाघनीया सा जयति। अत्र नियमस्य क्रियारूपत्वादेवंविधव्यापारयोगेऽपि तत्सम्बन्धकथनादतिशयोक्तिः। इह 'मनसि मनसि' इति सार्थकस्य 'विदितविदित' 'कल्पिताकल्पिता' इति उभयत्र सार्थकानर्थकस्य अनन्तरायान्तराया इत्यत्र निरर्थकस्य समुदायस्यावृत्तिः। एतदुक्तं काव्यदर्पणे—

**'अनर्थका वा भिन्नार्थास्सार्थकानर्थकाश्च वा।**
**आवर्त्यन्ते क्रमाद्वर्णा यदा स्याद् यमकं तदा ॥' इति।**

एतत् त्रिविधमपि पुनश्चतुर्विधं भवति। तच्चोक्तं—

'श्लोकार्धपादं तद्भागावृत्त्या तत्स्याच्चतुर्विधम्।' इति। तत्र पादभागवृत्तावेवानर्थकत्वादयो भेदाः। न तु श्लोकार्धपादेषु। तत्र लोकावृत्त्या यथा—

**"नारावणावयं भूमा भियामा पातुको हि नः।**
**समभूदयदायी नो रक्षसां त्वेन साधुना ॥"**

पदानि— न, अरौ, अणौ, अयं, भूमा, भियां, आपातुकः, हि, नः, समभूत्, अयदायी, इनः, रक्षसां, तु, एनसा, अधुना ॥

अन्वयः— अरौ अणौ सति नः अयं भियां भूमा आपातुकः हि नः एनसा रक्षसां अयदायी इनस्तु समभूत्। अर्थस्तु रावणवधार्थिनां देवानां हरिं प्रति वचनम्। अत्र हे हरे इति सम्बुद्धिः प्रकृता। हे अरे अरौ अणौ सति अल्पे सति नः अस्माकं अयं भियां भूमा भयानां प्राचुर्यं ना पातुकः नागच्छति। हि यस्मात् अस्मत्पापेन रक्षसां

राक्षसानां अयदायी शुभप्रदः 'अयः शुभावहो विधि'रित्यमरः। इनस्तु समभूत्। तस्मात् इदं भयप्राचुर्यं समुपस्थितमिति प्रथमश्लोकार्थः। द्वितीयस्य पदानि न, अरावणाः, वयं, भूम, आभिया, मा, आपातु कः हि, नः, समभूदयदायी नः रक्ष सान्त्वेन साधुना।

हे हरे वयं अरावणाः रावणरहिताः न मा भूम स्यामैवेत्यर्थः। नञ्द्वयं प्रकृतार्थातिशयसूचकम्। तदर्थं अभिया अभयेन को हि नः पातु। न कोऽपि त्वदन्य इत्यर्थः। तस्मात् समभुवः सर्वभूमेः उदयम् अभ्युदयं दातुं शीलं अस्येति तादृशस्त्वं नः अस्मान् साधुना मनोज्ञेन सान्त्वेन सान्त्ववचनेन रक्षेति॥

अर्धयमकं यथा—

सहेमहीराभरणादरं विना त्वयाननै रावणवारणं न ते।
सहेमहीराभरणादरं विना त्वयाननैरावणवारणं न ते॥

पदानि— सहेमहीराभरणादरं, विना, त्वया, आननैः, रावणवारणं, न ते, सहेमहि, इराभरणादरं, विना, तु, अयानन, ऐरावणवारणं, न ते॥

अर्थः— न ते भक्ते अयं आनयति जीवयतीति अयाननः शुभकर्मसंपादकः। अन प्राणने इत्यस्माण्ण्यन्तात् कर्तरि ल्युट्। सम्बुद्धिः आननैः स्वमुखैः इराभरणादरं भूभरणनिर्भयं सहेमहीराभरणादरं स्वर्णवज्रभूषणसादरं ऐरावतमिव कक्ष्यादिभिर्विभूषितमित्यर्थः। ऐरावणस्य दिग्गजस्य वारणं निरोधकं रावण एव वारणः गजः तं ते तादृशा वयमिति शेषः। विना परमात्मना त्वया विना न सहेमहि सोढुमशक्ताः स्मः।[१] शकिलिङ् च (३-३-१७२) इति लिङ्।

अथ पादावृत्तौ बहवो भेदाः सन्ति। तदुक्तम्—

'आवृत्तावाद्यपादादेर्द्वितीयादौ भिदा नव' इति

तथाहि— प्रथमपादस्य द्वितीयादिभिस्त्रिभिः क्रमाद्यौगपद्येन चावृत्तौ चत्वारः। द्वितीयस्य तृतीयचतुर्थाभ्यां द्वौ। तृतीयस्य चतुर्थेनावृत्तावेक इति सप्त। प्रथमस्य द्वितीये तृतीयस्य चतुर्थे एकः। प्रथमस्य चतुर्थे द्वितीयस्य तृतीये चैकः। आहत्य न वेत्यर्थः। प्रथमस्य द्वितीयेन यथा—

१. शकेर्लिङ् इति पाठः।

नाम्ना यशोभाजितवादिवाचा नाम्ना[१] यशोऽभाजितवादिवाचा ।
न धीरयोगीन्द्र दिशावधूटी दुकूलधम्मिल्लकमल्लिमाल्यम् ॥

आदिवाचा वेदेन हेतुना आम्नायशोभया । अभ्यासजन्यकान्त्या जिता वादिनां वाग्येन तत् । तेन तव नाम्ना दिशां क्षौममल्लिकामाल्यकल्पं यशः न ना भाजि ॥ प्रथमस्य तृतीयेन यथा—

नानाविधैर्यशोभासि सुमेरोरपि कैर्बुधैः ।
नानाविधैर्यशोभासि शीलं योगीन्द्रमौनिनः ॥

सुमेरोरपि धैर्यशोभामस्यतीति धैर्यशोभासि शीलं नानाविधैः स्वैः परैश्च कैर्बुधैः नानावि नास्तावि । स्तुतमेवेत्यर्थः ॥

प्रथमस्य चतुर्थेन यथा—

साधूनयन्तीव्रतमा दरेण संयोजयेदित्यरिसूरिसङ्घः ।
सुधीन्द्रधीरुद्वहते नितान्तं साधूनयंती व्रतमादरेण ॥

तीव्रं तीक्ष्णं तमो यस्यासौ अरिसूरिसङ्घः, साधून् दरेण भयेन योजयेत् भीषयेदिति मत्वा तमरिसूरिसङ्घं धूनयन्ती सा सुधीन्द्रस्य धीर्नितान्तं व्रतं नियमादरेणोद्वहते ॥

द्वितीयस्य तृतीयेन यथा—

त्वद्दानकीर्तिस्तनुते सिताभा सद्यो धुनीतामरसालसत्वम् ।
सद्योधुनीतामरसालसत्त्वं विसृत्वरीयं विजयीन्द्रयोगिन् ॥

कीर्तिः सिताभा सद्योधुनीतामरसानां स्वर्गनदीपद्मानामलसत्वं मान्द्यं तनुते । तथा अमरसालानां कल्पवृक्षाणां सत्त्वं प्राशस्त्यं धुनीत कम्पयितुं शक्नोति । 'शकि लिङ् च' इति लिङ् । द्वितीयस्य चतुर्थेन आवृत्तिस्तु अत्रैव तृतीयचतुर्थपादयोः व्यत्यासेन बोध्या ॥ तृतीयस्य चतुर्थेनावृत्तिरप्यत्रैव श्लोके सद्यो धुनीतेति पादस्य तृतीयत्वेन चतुर्थत्वेन च पाठे सति भवति । प्रथमस्य द्वितीयेन तृतीयस्य चतुर्थेन

१ हे धीरयोगीन्द्र ! आदिवाचा आम्नायशोभाजितवादिवाचा तव नाम्ना दिशां दुकूलधम्मिल्लकमल्लिमाल्यं यशः न न अभाजि इत्यन्वयः ।

आवृत्तिश्च घनाघनालीरिति वक्ष्यते। तत्रैव प्रथमस्य चतुर्थेन द्वितीयस्य तृतीयेन आवृत्तिश्च द्वितीयस्य चतुर्थत्वेन पाठे स्यात् ॥

तत्र प्रथमपादस्य युगापरावृत्तिर्यथा—

**समुद्रमानन्तरसादनेनस्समुद्रमानन्तरसादनेनः।**
**समुद्रमानन्तरसादनेनस्समुद्रमानन्तरसादनेनः**

पदानि— समुद्रमानं, तरसादनेनः, समुद्रमानन्तरसः अदने नः समुद्र मा अनन्तर सात् अनेनः समुद्रम अनन्त रसात् अनेनः ॥

अर्थस्तु— मुदा सहितास्समुदः रमानन्तरसाः लक्ष्मीशेषभूमयः येन सः तत्सम्बुद्धिः। अनेन निरन्तरनिरतिशयानन्दानुभवो गम्यते। मुद्रया श्रीवत्सकौस्तुभादिचिह्नेन सहितः तत्सुबुद्धिः समुद्र। अन्तरं व्यवधानं देशादिभिर्न विद्यते यस्य तत्संबुद्धिः अनन्तर। सर्वदिग्देशकालव्यापकेत्यर्थः। एनः पापं न विद्यते यस्मात् तस्य सम्बुद्धिः अनेनः। आश्रितपापहारिन् इत्यर्थः। हे अनन्त आगतः इनः एनः न विद्यते यस्य सः अनेनः अस्वामिकः स्वयमेव सर्वलोकस्वामीत्यर्थः। तरसं मांसं अदनं भक्षणं येषां ते तरसादनाः राक्षसाः तेषामिनः प्रभुः नः अस्माकं अदने ग्रसने रसात् वीर्यात् समुद्रमानं प्रलयसमुद्रगर्वं मा सात् मा समापतेत्। षो अन्तकर्मणीति धातोः विभाषाघ्राधेङित्यादिना सिचो लुक्। यथा प्रलयसमुद्रः सर्वान् ग्रसिष्यते तद्वदिदानीमेवायं मास्मान् ग्रसिष्ट इति भावः। तस्मात् समुद्रम समुद्रच्छ द्रमगतौ ॥

अथ प्रथमपादस्य द्वितीये तृतीयस्य चतुर्थे च आवृत्त्या यथा—

**घनाघनाली रसिता विराजिता घनाघनालीरसिताविराजिता।**
**विनोदयन्नो दयसे मनोहरे विनोदयन्नो दयसे मनोहरे ॥**

पदानि— घनाघनालीः असिताः विराजिताः विनोदयन् नोदयसे मनः हरे उदयं नः दयसे मनोहरे ॥

अर्थस्तु— हे हरे असिताः श्यामाः घनाघनालीः वार्षिकमेघपंक्तीः असिता क्षेप्ता कांत्येति गम्यते। मनोहरे विराजि पक्षिराजे विराजिता शोभमानस्त्वं नः अस्माकं मनः विनोदयन् सन्तोषयन् ताः तादृशीः घनाघनालीः घनानामघानां दुःखानां

नालीः प्रणालीः परम्पराः उदयमाविर्भावं विना नो नोदयसे न क्षेपयसे । अत एव नोदयसे दयां न करोषि । नो इत्यस्य उभयत्र सम्बन्धः ॥

द्वितीयचतुर्थयोर्यथा—

**सुधीन्द्रहंसस्सुगवा जयश्रीभाजा लसन्द्रागतनोदशेषान् ।**
**बुधान् प्रतीपान् स्वमतागमोद्यद्धाजालसान्द्रागत नोदशेषान् ॥**

सुधीन्द्रहंसः सुधीन्द्रपरिव्राट् जयश्रीभाजा सुगवा शोभनवाचा अशेषान् प्रतिवादिबुधान् स्वमतशास्त्रजन्यप्रतीतिपरम्परया आगतः प्राप्तः नोदः क्षेपः शेषो येषां तान् अत एव अलसान् मन्दान् अतनोत् अत्र श्लेषोत्थापितमेकदेश-विवर्तिरूपकं प्रतिवादिनां तिमिरत्वविवर्तनात् प्रतीयते ।

अथ पादभागावृत्त्याखण्डयमकान्युच्यन्ते । तानि काव्यदर्पणे बहुधा विभक्तानि । यथा—

**द्विधा विभागे पादानां प्रथमायादिमा यदि ।**
**द्वितीयाद्यादिभागेषु यम्यन्ते स्युर्भिदा दश ॥**
**प्रथमाद्यन्तिमा भागा द्वितीयाद्यंतिमांशगाः ।**
**भवेयुश्चेत्तदापि स्युरेवमेव भिदा दश ॥**
**एवं द्विधा विभागे तु त्रिंशदित्यूह्यतां क्रमात् ॥ इति ।**

तथाहि— प्रथमं चतुर्णां पादानां द्वेधा विभागे प्रथमपादाद्यर्धभागस्य द्वितीयपादाद्यर्धभागेन तृतीयपादाद्यर्धभागेन चतुर्थपादाद्यर्धभागेन युगपच्चावृत्त्या चत्वारो भेदाः । द्वितीयपादाद्यर्धभागस्य तृतीयपादाद्यर्धभागे चतुर्थपादाद्यर्धभागेन तृतीयपादाद्यर्धभागस्य चतुर्थपादाद्यर्धभागेन चावृत्त्या त्रयः । आहत्य सप्त । प्रथमपादाद्यर्धभागस्य द्वितीयतृतीयाद्यर्धभागाभ्यां चावृत्त्या त्रय इत्याहत्य दशेत्यर्थः । एवमेव प्रथमपादाद्यन्त्यभागानामावृत्त्या दशत्वमित्याहत्य विंशतिः । तथैव पादानां त्रेधा विभागे प्रथमपादादि मध्यमभागावृत्त्या दशत्वे सति आहत्य त्रिंशद्भेदा इत्यर्थः । तत्र पादादिभागस्य युगपदावृत्त्या यथा—

**समुदाहतसच्छास्त्रसमुदायो विराजते ।**
**समुदारो हि योगीन्द्रः समुदा योजयन् बुधान् ॥**

सम्यगुदारः समुदारः सह मुदा प्रीत्या ॥

**सदसि प्रतिसंख्यावत्सदसिक्ष्णुतवागसौ ।**
**यमिनं प्राप्य योगीन्द्रयमिनं भान्त्यमी बुधाः ॥**

प्रतिसंख्यावतां विमतविदुषां सदसि सन् प्रशस्तः असिः खड्गः तद्वत् क्ष्णुता तीक्ष्णा वाग्यस्य सः । स्पष्टमन्यत् । अत्र प्रथमस्य द्वितीयादौ तृतीयादेश्चतुर्थादौ ॥

प्रथमाद्यस्य तृतीयादौ द्वितीयादेश्चतुर्थादौ । यथा—

**कदलीलावमालावीत् कुञ्जरीव सुधीन्द्रगीः ।**
**कदलीकसुधीमेधां कुञ्जरीणसरित्सखी ॥**

कदलीलावं कदलीमिव । कुञ्जरीणा[१] प्रवहन्ती या सरित् तत्तुल्या कदलीकसुधीमेधां कुत्सिताप्रिय विद्वन्मतिम् । एवमन्येऽपि भेदा ऊह्याः ।

प्रथमपादान्त्यभागस्य युगपदावृत्त्या यथा—

**अभयमनेकाननतः प्रदिश पराभूतदण्डकाननतः ।**
**हतमुनिलोकाननतः कथमपि नः पाहि मुक्तकाननतः ॥**

अनेकाननतः रावणात् तिरस्कृतदण्डकाननतः । हतं मुनिलोकस्य अननं जीवनं येन ततः । स्वर्गं मुक्त्वा कथमपि अनतः जीवतः नः पाहि ।

प्रथमद्वितीयाद्यन्तयोः तृतीयचतुर्थाद्यन्तयोर्यथा—

**त्वय्येव योगीन्द्र विकासमेधा धिया त्वदन्येष्वपि कासमेधा ।**
**किं तेऽद्य चेद् बोधविभाकरोऽति भात्यन्यवित्तारविभाकरोति ॥**

विकासा चासौ मेधा च विकासमेधा । समेधा समीचीना वृद्धिः । बोध एव विभाकरः, अतिभाति । अन्यविदः अन्यविद्वांसः । त एव ताराणि नक्षत्राणि तेषां भा । यथा—

**विजयीन्द्र सभास्तारे त्वय्यर्के प्रतिपद्यते ।**
**तारत्वं प्रसभास्तारे विमतोऽप्रतिपद्यते ॥**

१. कुञ्जात् रीणा स्रुता

सभास्तारे सभ्ये प्रसभेन बलात्कारेण अस्तं निरस्तं आरं अरिसमूहो येन तस्मिन् सति अप्रतिपत् अज्ञः विमतः तारत्वं नक्षत्रत्वं प्रतिपद्यते प्रयाति। हे यते विजयीन्द्र इति सम्बुद्धिः। एवमन्येऽप्यूह्याः।

पादेष्वाद्यन्तभागयोरुदाहरति—

**सुहृदा जयीन्द्रयतिनोऽसुहृदामहिता बुधेन्द्रपटलीमहिताः।**
**वतिताधनाश्रयतृषावनिता मदयन्ति नः परमसीमदयम्॥**

असुहृदाममित्राणां, अहिताः विद्वच्छ्रेष्ठसमूहपूजिताः दारधनेषणे अप्राप्ता जयीन्द्रयतयः सुहृदा शोभनहृदयेन असीमा निरवधिका दया यथा तथा नोऽस्मान् मदयन्ति।

पादद्वयसन्धियमकमुदाहरति—

**वाग्भरेण विजयीन्द्रसाधुना सा धुनाति तव शिष्यमण्डली।**
**अन्यसूरिपटलं नवारुणी वारुणीतरदिशीव भा तमः॥**

वारुणी पश्चिमदिक् तदितरा दिक् पूर्वा दिक् तस्यां न वा आरुणी सौरी भा द्युतिः तम इव॥

पादादि भागयोरावृत्त्या यथा—

**दारयोदारयोगीन्द्र हृदयं विदयं द्विषाम्।**
**तपनातपना श्याः स्युः निशिता निशि तारकाः॥**

हे उदारयोगीन्द्र! द्विषतामयं शुभविधिं दारय। तत्र दृष्टान्तः तपनातपेत्यादिः।

पादान्त्यभागयोर्यथा—

**विजयीन्द्र तापसपते स पतेदभिवक्ति योऽभिभवता भवता।**
**विजयेत किं नु तरसा तरसादपि सिंहमुत्प्रसरः सृमरः॥**

तरसात् मांसभुक्

पादमध्यमकं यथा—

**विधुसुधामयधाम यशो दिशामपि दुकूलति कूलति स्वापगाम्।**
**स्तगयदभ्रमदभ्रमविन्निशाधृतविभावसुभावसुधीन्द्र ते ॥**

विधुश्चन्द्रः सुधाऽमृतम्। एतन्मयमेतद्रूपम्। धाम द्युतिः यस्य तत्ते तव यशो दिशां दुकूलति। क्षौममिवाचरति। स्वापगां कूलति आवृणोति। कूल आवरणे। अविन्निशायाः अज्ञानरात्रेः धृतविभावसुभाव धृतसूर्यत्व इति सम्बुद्धिः। एवमादयो यमकानामत्यन्तबहवो भेदाः दुःसंख्यानाः। परस्परसांकर्यात्।

**सदसा धुविता सदसा धुविता सदसा धुविता नमयन्नमयन्विजयीन्द्रयते।**
**निगमव्यसितुः सदृशा सदृशा नय मानय मानय मानयमा ॥**

सदसा सभया सदसाधूनां सज्जनासज्जनानां वितानं समूहं अयन् प्राप्नुवन् नमयन् प्रह्वयन् धुविता विभाजकः त्वं निगमव्यसितुः सदृशान् वेदव्यासस्य दृशा ज्ञानेन अपमानयमान् शुभविधिचित्तोन्नतिनियमान् अय प्राप्नुहि मा मां च मानय आद्रियस्वेति द्विःसमीरणमित्युपलक्षणम्। बहुधावृत्तिदर्शनात् ॥

अथ पुनरुक्तवदाभासं लक्षयति—

**पुनरुक्तवदाभासः पुनरुक्तेस्तथात्वतः।**
**तेजो धाम बुधामिन्द्रो जिष्णुस्स धिषणो गुरुः ॥**

तेजसां प्रभावानां धाम स्थानं बुधां विदुषामिन्द्रः श्रेष्ठः जिष्णुः जयशीलः। सुधिषण सुमतिः गुरुराचार्यः विजयीन्द्र इति शेषः। अत्र तेजो धामशब्दयोः दीप्तिपर्यायत्वात् इन्द्रजिष्णुशब्दयोः देवेन्द्रपर्यायत्वात् धिषणगुरुशब्दयोः बृहस्पतिवाचकत्वाच्च भवत्येवैकार्थता भ्रमकारित्वम् ॥

उदाहरणान्तरमाह—

**स्तौमि श्रीविजयीन्द्रदेशिकमणे प्रौढिं तवाढौकित-**
**प्रज्ञागन्धवहप्रभञ्जन भरोदर्कैकभास्वद्धुराम्।**
**याति स्फूर्तिमिह व्रजत्यभिदधात्यानंदमाच्छादय-**
**त्याशाचक्रमहो विभाति रुचिराकारा चिरं द्योतते ॥**

हे विजयीन्द्रदेशिकमणे ! तव प्रौढिं स्तौमीति सम्बन्धः। कीदृशीं प्रौढिं आढौकितानां विवदितुमागतानां प्रज्ञागन्धस्य बुद्धिलेशस्य वहानामल्पबुद्धीनामित्यर्थः। प्रभंजनस्य प्रभंगस्य भरोऽतिशयः स एवोदर्कः उत्तरफलं तेन एका मुख्या भास्वती भासमाना धूर्भरोऽतिशयो यस्यास्तां प्रतिवादिभंगोत्तरक्षणप्राप्तविराजमानविद्यातिशयामित्यर्थः। अत्र गन्धवहप्रभञ्जनशब्दयोरर्कपर्यायत्वादर्कभास्वच्छब्दयोः सूर्यपर्यायत्वान्नामविषयः पुनरुक्तवदाभासः। उत्तरार्धेनाख्यातविषयमाह— या विभा प्रौढिजन्या कीर्तिः हेतुकार्ययोरभेदोक्तिरुपचारलक्षणा। इह लोके अतिस्फूर्तिमतिप्रकाशतां व्रजति आनंदमपि आह्लादनं च दधाति पुष्णाति अपि चार्थः। आशाचक्रं दिङ्मण्डलमाच्छादयति। अतिरुचिराकारा अतिमनोज्ञस्वरूपा चिरं द्योतते अहो आश्चर्यम्। इह याति व्रजति, अधिदधात्याच्छादयति विभाति द्योतते इत्याख्यातद्वन्द्वत्रिकस्य यथासंख्यं गमन तिरोधानद्योतनरूपार्थैक्यभ्रमकारित्वम्। अत्यपिशब्दयोर्विभागात्तदाभासत्वम्। आख्यातविषयः सभंगः। अभंगस्तु नामगोचर इति विवेकः। तदुक्तं साहित्यरत्नाकरे—

**पुनरुक्तवदाभाति यत्रार्थो न तु तत्त्वतः।**
**पुनरुक्तवदाभासस्सनामाख्यातगो[१] द्विधा॥ इति॥**

काव्यदर्पणे[२] तु शब्दनिष्ठत्वेन शब्दार्थनिष्ठत्वेन च [३]द्विविधः पुनरुक्तवदाभासः। स भंगाभंगभेदेन पुनर्द्विधे[४]त्युक्तम्। तथा हि—

**एकार्थताभ्रांतिकरानेकार्थत्वनिबन्धने।**
**पुनरुक्तवदाभासं प्रवदन्ति विपश्चितः॥**
**शब्दैकनिष्ठः शब्दार्थद्वयस्थश्चेत्यसौ द्विधा।**
**सभंगाभंगभेदेन द्विधा शब्दैकसंश्रयः॥**
**भूषितोऽलंकृतस्नेहो मृगेष्वास्ते स राघवः॥ इति सभंगः॥**

**स एष राजऽति[५]गुरुधिषणः पृथिवीपतिः।** इत्यभंगः।

---

१. स नामाख्यातयोर्द्विधा इति पाठः ख पुस्तके २. काव्यदर्पणकारस्तु इति पाठः क पुस्तके
३. चतुर्विधः इति पाठः ख पुस्तके ४. इत्युक्तवान् इति पाठः ख पुस्तके
५. राजितगुरुधिषणः इति पाठः खपुस्तके

'पाटलारुणदिग्भागा भांत्यमी धर्मवासराः'। इत्युभयनिष्ठश्लोदाहृतः भुवि उषितः भूषितः। अलंसम्यक्कृतस्नेहः। गुर्वी धिषणा यस्येति गुरुधिषणः। पाटली पुष्पैररुणा इत्याभासता। तत्र नामगोचरो यथा—

**महीसुपर्वदेवोऽयं सुमना अमृताशनः।**
**मुनिवृंदारको भाति सुधीन्द्रो विबुधो भुवि॥**

अत्र सुपर्वादिशब्दानां षण्णां सुरपर्यायत्वेऽपि ब्राह्मणश्रेष्ठः सुचित्तः भगवन्निवेदितान्नभुक्, अमृतं यज्ञशेषः मुनिश्रेष्ठः विबुधो विद्वान् इत्येषामाभासत्वम्। आख्यातगोचरो यथा—

**समावृत्य दिशो योगिराज ते भासते यशः।**
**कस्त्वां साधारणं बुद्धिमन्यते मनुते बुधः॥**

अत्र योगिराज इति च्छेदः। हे बुद्धिमन् यते इति च। उभयगोचरो यथा—

**सुधीव्यक्तिषु मुख्या सा कला विद्या विराजते।**
**संवित्प्रेक्षाद्भुताव्यक्तियोगीन्द्राख्याभिधा पटुः॥**

अत्र पूर्वार्धे कलावित् या इति सभंगः। उत्तरार्धे संवित् संवित्ततेः प्रेक्षया दर्शनेन अद्भुता इति। योगीन्द्राख्या योगीन्द्रनामिका अभिधापटुः उक्तिपटुः इति चाभङ्गः। उभयनिष्ठश्च॥

**अथ चित्राण्युद्दिशति—**

**स्वरवर्णस्थानबन्धगतीनां नियमस्तथा।**
**प्रहेलिका च गूढं च च्युतकं चित्रमुच्यते॥**

स्वराणामकारादीनां वर्णानां ककारादीनां स्थानानां कण्ठादीनां बन्धानां चक्रपद्मादीनां गतीनामारोहावरोहरूपाणां च नियमः। तथा प्रहेलिका गूढोत्तरकल्पना गूढं क्रियादीनां गोपनं च्युतकं मात्राभ्रंशः तदेतच्चित्रमित्यर्थः। तत्र स्वरनियमेषु ह्रस्वैकस्वरमुदाहरति—

**फणावद्वरपर्यङ्कपदपङ्कजवन्दन।**
**परसद्मजहर्यक्ष जयवद्वरसञ्जय॥**

फणावतां सर्पाणां वरः शेषः (सः) पर्यङ्कः शय्या यस्य तस्य शेषशायिनो हरेः पदपङ्कजयोः वन्दनः स्तोता तत्सम्बुद्धिः । परसन्तः अन्यविद्वांसः त एव गजास्तेषां हर्यक्षः सिंहः तत्सम्बुद्धिः । जयवद्वर विजयीन्द्र सन् विद्वन् जय उत्कर्षेण वर्तस्व । अत्र अकारैकनियमः । यथा वा—

दिशि दिशि विदिर्तिं विधित्सि निक्षि-
द्विदिविजिदिष्टिविदि[1] द्विदिग्धि शिष्टिम् ।
निशिपिसिगिरिभिज्जितिस्मितिस्वि-
त्रिदिवि विहिंसिनिधिक्तितिक्षितिं हि ॥

हे विजित् विजयिन् दिशि दिशि सर्वदिक्षु विदिति खण्डनं विधित्सिनि अवश्यं विधातुमिच्छौ । दधातेः सन्नन्तादावश्यके णिनिः । क्षिद्विदि क्षीणमतौ इष्टिविधित्वि यज्ञविधि लुनातीति तादृशाः तस्मिन् । गिरिभिद इन्द्रस्य जेता तस्मिन् । स्मितिः स्मयः गर्वः तं (तां) क्ष्वेदन्ते मुञ्चन्तीति स्मितिस्विदः ते च ते त्रिदिविनो देवाः तान् विहिनस्तीति तथोक्ते निशिपिशि निशाचरे रावणे पिस· गतौ ततः क्विप् शिष्टिमाज्ञां दिग्धि उपचिनु । लुम्प तस्य निग्रहं कुरुष्वेत्यर्थः । हि यतः कारणात् ईदृशे तितिक्षितिं तितिक्षां क्षमां धिक् । तिजेः स्वार्थे सन्नन्तात् । क्तिन् । तत्र क्षमा निन्दनीयेत्यर्थः । धिगुपर्यादिषु इति धिक्शब्दयोगे द्वितीया । अत्र इकारैकनियमः । वर्णनियममुदाहरति-

विजयीन्द्रयतीशान नुमस्त्वामेव नेतरम् ।
नानेनाननुन्नैनोनूनो नानेन नो ननु ॥

पदानि— नानेनाननुत्, ना, एनोनूनः, न, अनेन नः, ननु । हे विजयीन्द्रयतीशान त्वामेव नुमः । नेतरमित्यस्य त्वदन्येषामसारत्वेन स्तुतिरफलेति लक्ष्यार्थः । नाना बहुविधानां इनानां प्रभूणां आननानि नौतीति नुत् । कर्तरि क्विप् । एवंभूतो ना मनुष्यः एनसा पापेन अनूनः पूर्णः ननु भोः नः अस्माकं अनेन मनुष्येण न प्रयोजनमिति शेषः । यथा वा

मीमामाममम मा[2] मूममा मामा ममामि माम् ।
मोमूमोमुममुं मोममिमोमा ममा ममी ॥

१ विधित्विदिग्धिशिष्टिम् इति पाठान्तरम् । २ मूम मामामामा इति पाठः ।

पदानि— मीमाम अमममाः मा अमूं अमां अ माम माम् इमांम् मो मूमः अमुं अमुं मोमं अं इमः मा अममं अमी ॥ रावणपीडितानां देवानां परस्परवचनम् । अममा ममत्वरहिता मा बुद्धिर्येषां ते अमममाः अमी एते वयमिति शेषः । अमूं एतां अमां बुद्धिभ्रंशं मा मीमाम मा गच्छाम । मीमृगतौ लोडुत्तमबहुवचनम् । किंतु इमां मां एतन्मानं प्रमां अमाम प्रपद्यामहै । अम गतौ पूर्ववल्लकारादिः । तत्कथमिति चेत् । मुः बन्धनं बन्धने मुः प्रकीर्तित इति वचनात् । तद्रहितम् । माया लक्ष्म्याः ऊमः पुरं निवासः तम् । 'अविश्रिचिशुशिष्टिभ्यः कित्' इत्यौणादिकोऽवतेर्मप्रत्ययः कित् । 'ज्वरत्वर' इत्यूठ् । 'ऊमः पुरम्' इति उणादिवृत्तिकारः । 'ऊमो व्योम्नि पुरेऽपि च' इति वैजयन्ती । अमुं अं इमं विष्णुं मोमूमः 'मूङ् बन्धने' इत्यस्मात् यङ् लुगन्ताल्लोडुत्तमबहुवचनम् । साधु गृण्हीमः । तस्मात् अमस्य रोगस्य व्यथायाः मां सम्पदं दुःखभारमिति यावत् । मेमः मा प्राप्नुमः । माशब्दः प्रतिषेधार्थोऽस्ति इति अत्र वर्णनियमः ॥ अथ स्थाननियमेषु मूर्धन्यनियममुदाहरति—

**भो भो मृषाराटीषि प्रव्राडेष तृणत्तृषः ।**
**वृषेणास्पृष्टरोषेण श्रीकृष्णप्रेष्ठहृद्दृढम् ॥**

हीनसम्बोधने रेशब्दः । रे रे तुच्छजन मृषा अबद्धं किल रारटीषि पुनः पुनः क्रोशसि । यद्ब्रूषे दोषमारोप्य तन्मृषेत्यर्थः । एष प्रव्राट् परिव्राट् । यद्यप्युणादिषु 'परौ व्रजे षः पदान्ते' इति परिशब्दे उपपदे व्रजेः क्विब् दीर्घषत्वानि व्युत्पाद्यन्ते तथापि बाहुलकात् प्रशब्दे उपपदेऽप्युक्तकार्यं भवतीति भावेन प्रव्राडित्युक्तम् । तृणत्तृषः तृणन्ती तृणवदाचरन्ती तृषा कामना यस्य सः तथोक्तः । तृणशब्दादाचारक्विबन्ताल्लटः शत्रादेशः । तृणीकृततृष्ण इत्यर्थः । अनेन जितकामत्वमुक्तम् । तथा अस्पृष्टरोषेण रोषादिदोषस्पर्शरहितेन वृषेण धर्मेण निवृत्तिरूपेण श्रीकृष्णस्य भगवतः प्रेष्ठं प्रियतमं हृद्यस्य तादृशं हृद्यस्येति वा तथोक्तः । षड्वर्गजयवानित्यर्थः । दृढं असन्देहम् । अत्र प्रतिवर्णं रेफादयो मूर्धन्याः । अमूर्धन्यमकारादयः स्वराश्चानुषङ्गिकाः । एवमुत्तरत्रापि ॥ यथा वा

**कृष्टिं वृत्रारिरेषोऽत्र प्रणम्रे मृष्टदृष्टिकृत् ।**
**हर्ष्टिं पृणन् ऋषीन्द्रोऽरौ रूडौर्वप्रोषणोग्रदृक् ॥**

कृष्टीनां विदुषां वृत्रारिरिन्द्रः प्रणम्रे जने मृष्टदृष्टिकृत् दयार्द्रदर्शनकृत् हृष्टिं हर्षं पृणन् पूरयन् एषः ऋषीन्द्रः विजयीन्द्रः अरौ शत्रौ रुट् रोष एव और्वः बडबाग्निः तेन प्रोषणं दाहः तेन उग्रा दृक् यस्य सः तथोक्तः अमूर्धन्यमुदाहरति—

**धियामंशेन मुख्येन वैदग्ध्येन च भूयसा।**
**कलाभिस्सकलाभिस्स जयीशः समपद्यत ॥**

तैर्हेतुभिर्जयीशः विजयीन्द्रः सम्पन्नः। अत्र मूर्धन्यवर्णाभावः ॥ ओष्ठ्यनियममुदाहरति—

**भ्राम्यन्तो बहुधोपपत्त्युरुधुरोद्भाविस्वभावा बुधो**
**ब्रूध्वं माध्वमतोपगुम्भपटुभोन्मेषो वचोविभ्रमैः।**
**भव्यः कोऽपि गुरुर्भवेत् भुवि पुरो भावी नु भूतो भवन्**
**भो विद्योपपदोपशोभिविभवात् पत्युः प्रभूतोपमः ॥**

भ्राम्यन्तः नानादेशेषु सञ्चरन्तः बहुधा बहुभिः प्रकारैः उपपत्त्या युक्त्या उरुधुरां उर्वीं धुरं अतिशयपाण्डित्यादिगतमुद्भावयति उत्प्रेक्षत इति उरुधुरोद्भावी तादृक् स्वभावः प्रकृतिर्येषां ते स्वभावात् सारासारविवेचनपटवः भो बुधः विद्वांस बुध्यतेः क्विप्। वचोविभ्रमैः वाग्विलासैः माध्वमतस्य माध्वसिद्धान्तस्य उपगुम्भे उपबृंहणे पटुः भायाः प्रतिभायाः उन्मेषो विजृम्भणं यस्य तादृशः। किंच विद्यापतिरित्यत्र विद्योपपदेन विद्याशब्दोपपदेन उपशोभी विभवः पाण्डित्यादिगुणातिशयः यस्य तस्मात् पत्युः विद्यापतित्वेन प्रसिद्धादित्यर्थः। तस्मात् प्रभूता प्रकर्षेण जाता उपमा तुल्यत्वं यस्यासौ विजयीन्द्रसदृशः इत्यर्थः। भव्यः शोभनः भूतोऽतीतः भवन् विद्यमानः भावी पुरोऽग्रे भविष्यन् वा कोऽपि गुरुः भवेन्नु ईदृशो गुरुर्भवितुमर्हति किम्। ब्रूध्वं वदत। न कोऽपीत्यर्थः। अर्हे कृत्यतृचश्चेति लिङ् ॥ यथा वा—

**वर्षुको वाक्पवीन् दुष्टविद्वद्भूभृत्सु मन्युभिः।**
**योग्युपेन्द्रो बहुप्रेक्षी विपक्षोद्भिदुरो भुवि ॥**

अत्र इन्द्रो योगीन्द्रश्च वर्ण्यते। इन्द्रपक्षे अवांचश्च ते पवयश्च, प्रकृते वाच एव पवयः वज्राः तान् वर्षुकः दुष्टविद्वांस इव भूभृतः पर्वताः तेषु, कुत्सितविद्वांस एव पर्वतास्तेषु च योगी युक्तः उपेन्द्रो विष्णुर्यस्य सः इन्द्रः, प्रकृते योगिशब्दोपगत इन्द्रः

योगीन्द्र इत्यर्थः । बहुप्रेक्षः अमितबुद्धिः, इन्द्रपक्षे बहुदृष्टिरित्यर्थः । अविपक्षाणां पर्वतपक्षाणां विपक्षाणां शत्रुविदुषां च उद्भिदुरः भेत्ता ॥

निरोष्ठ्यमुदाहरति—

**स जयति यतिचन्द्रः साहिती शास्त्रसान्द्रः**
**सततगलिततन्द्रस्सद्यशाः श्रीजयीन्द्रः ।**
**जहिहि निजजयाशां जाग्रदायासलेशा-**
**ज्जड यदधिनिदेशाज्जात हर्षा दिगीशाः ॥**

यतिचन्द्रः यतिश्रेष्ठः साहितीभिः शास्त्रैश्च सांद्रः पूर्णः सततं गलिततन्द्रः गतालस्यः सद्यशाः प्रशस्तकीर्तिः एवंभूतः श्रीजयीन्द्रः जयति । तस्मात् हे जड ! मूढवादिन् ! निजां जयाशां जहिहि त्यज, जाग्रत् जायमानः आयासलेशः प्रयत्नलेशः येन तस्मात् यदधिनिदेशात् यस्य जयीन्द्रस्य आज्ञया दिगीशाः दिक्पालसदृशा राजानः दिशेरुच्चारणक्रियात्वेन निर्देशात् निरर्गलोपन्यासात् इन्द्रादयोऽपीति वा अर्थः । जातहर्षाः यदतिशयाद्राजानोऽपि यदाज्ञापरिपालनजागरूकाः यदुपन्याससन्तुष्टाः तादृशं विजयीन्द्रं कथं त्वं जेष्यसि ? इति भावः ।

यथा वा—

**सद्गणैस्सहितस्सान्द्रः कलाजालैरलंकृतः ।**
**सदानन्तान्तरस्थायी यतिचन्द्रस्स राजते ॥**

सद्गणैः साधुवृन्दैः, नक्षत्रगणैश्च सहितः, सदा अनन्तायाः भूमेः आकाशस्य (च) अन्तरे मध्ये स्थायी ।

तालव्यमुदाहरति—

**यस्य श्रीजनितैश्वर्या वैजयीशयतीश्वरी ।**
**जयत्यच्छाच्छया छव्या ज्यौत्स्नीयन्त्यनिशं दिशः ॥**

अच्छाच्छया अच्छस्य निर्मलवस्तुनः चन्द्रादेस्तुल्यया प्रकारे गुणवचनस्येति द्विर्भावः । छव्या कांत्या दिशः कर्मीभूताः ज्यौत्स्नीयन्ती ज्योत्स्नावतीरिवाचरयन्तीति मत्वर्थे ज्योत्स्नादिभ्य उपसंख्यानमित्यण् प्रत्ययः ङीप् तदन्तादाचारे क्यच्,

तदन्ताल्लटः शत्रादेशः, ततः ङीप् प्रत्ययः। जनितैश्वर्या भर्तुराधिपत्यजननी यद्वा सर्वलोकाक्रमणात् प्राप्तवैभवा विजयीन्द्रयतीश्वरसम्बन्धिनी यशःश्रीः कीर्तिसम्पत् जयति। यथा वा—

दिशो विशोध्य श्रीशौरिशय्याजन्या यशोझरी।
विश्वाभिवेशं योगीन्द्री विचेखेलेति योगिनी॥

श्रीशौरेः कृष्णस्य शय्या शेषः, तस्य जन्या सखी योगीन्द्रसम्बन्धिनी यशोझरी कीर्तिप्रवाह एव योगिनी सिद्धा दिशो विशोध्य निर्मलीकृत्य विश्वाभिवेषं विश्वानि जगन्ति अभिविश्य विशिपतिपदीत्यादिना णमुल्प्रत्ययः। विचेखेलेति भृशं विखेलति।

अतालव्यमुदायरति—

प्रव्राडग्रसर ! प्रवृत्तभवदुद्दामप्रतापानल-
प्लुष्टान्तःकरणा रणाग्रसरणाबद्धोद्धवद्धावनाः।
अस्तप्रज्ञमपास्तकभरं ग्रस्तोरुसारस्वतं
भ्रान्तास्सन्ततमासमुद्रमभवन् भूमावलब्धौकसः॥

प्रव्राजां परिव्राजां अग्रसर श्रेष्ठ हे विजयीन्द्र !(इत्यर्थः) प्रवृत्तेन भवतः उद्दामेन निरर्गलेन प्रताप एवानलः तेन प्लुष्टान्तःकरणाः दग्धहृदयाः रणस्य वादकलहस्य अग्रसरणौ प्रारंभ एव उद्धवद्धावनाः जायमानापक्रमाः अस्तप्रज्ञं अस्तमितज्ञानं अपास्तः पुस्तकभरः यस्मिन् ग्रस्तं प्रमुषितं उरु महत् सारस्वतं शास्त्रं च यथा तथा भ्रान्ताः अनवस्थिताः प्रत्यर्थिविबुधा इति शेषः आसमुद्रं समुद्रपर्यन्तं अलब्धौकसः अनवाप्ताश्रयाः अभवन्। अद्धा दहनोपद्रुतानामुदकपर्यन्तधावनं युक्तमेवेति भावः॥

यथा वा—

वादाहवोपक्रमधूतसाधनास्तवामतास्त्वन्महसोष्मलान्तराः।
सापक्रमास्तापसवासवागमन्न तापसंवारणमासमुद्रतः॥

हे तापसवासव ! तापसेन्द्र ! सापक्रमाः सपलायनाः त्वन्महसा तव प्रतापेन ऊष्मलान्तराः दग्धहृदया इत्यर्थः समुद्रपर्यन्तं तवामताः विमतविद्वांसः तापसंवारणं तापनिवृत्तिं नागमन् ॥

दन्त्यमुदाहरति—

**दीव्यद्दिव्यधुनी विधूननविधावैदग्ध्यसन्धित्सुवाक्**
**सन्तत्युद्धतिवर्धितातिलल्तितद्वैतानवद्योन्नतिः ।**
**सत्यानेतृसनातनातिनवनो विद्याधिनाथव्रती**
**नानातन्त्रतती स्वतन्त्रविलसद्विद्य[१]स्स विद्योतते ॥**

दीव्यन्त्याः दिव्यधुन्याः स्वर्गगायाः विधूननविधायां क्षेपणविधौ वैदग्ध्यं संधित्सूनां संधातुमिच्छूनां वाचां सन्ततेः उद्धत्या उत्कर्षेण वर्धिता वृद्धिं प्रापिता अतिललितस्य श्लाघ्यतरस्य द्वैतस्य द्वैतशास्त्रस्य अनवधोन्नतिः निर्दोषातिशयः येन सः तादृशः, सत्यानेतरि श्रीकृष्णे सनातनं नित्यं अतिनवनं अतिशयितस्तुतिर्यस्य सः, विद्याधिनाथः प्राक्तननाम्ना विद्यापतिः व्रती तापसः सर्वतन्त्रततौ सर्वशास्त्रकलापे स्वतन्त्रा विलसन्ती विद्या यस्य स विजयीन्द्रः विद्योतते । विलसद्बुद्धिरिति पाठे वबयोरभेदोऽभिमतः ॥

अदंत्यमुदाहरति—

**चामीकरांबरकृपापरिणाहपूर्णः श्रीमज्जयीशहरिणांकयशःप्रचारः ।**
**रज्जच्चराचरचकोरकचक्रचक्षुरक्षीणजाड्यहरणाभिमुखप्रचारः ॥**

चामीकराम्बरस्य विष्णोः कृपापरिणाहेन दयातिशयेन पूर्णः श्रीमज्जयीन्द्र एव हरिणांकश्चन्द्रः तस्य यशः प्रचारः कीर्तिप्रसारः रज्य(ज्ज)न्तः अनुरागयुक्ताश्चराचराः प्राणिन एव चकोरकास्तेषां चक्रं समूहः तच्चक्षुषामक्षीणस्य जाड्यस्य हरणे अभिमुखः उद्युक्तः प्रकारः स्वरूपं यस्य तादृशो भवतीति शेषः ।

अथ कण्ठ्यमुदाहरति—

**लोकालोकधराधरापरघनग्रावान्ध्यसैद्धांजन-**
**स्थेमाकल्पन (क) कल्पशाखिसततोदंचल्लतांतोपमम् ।**

१. पाठान्तरम्- विलसद्बुद्धिः ।

**कर्मंद्यानत भव्यपादजलज ! प्रद्योतते त्वद्यशः-**
**सौरभ्यांचदलंक्रियावदनवद्यैतत्प्रबन्धप्रभो ॥**

कर्मन्दिभिः मस्करिभिरानतं नमस्कृतं भव्यं शुभं पादजलजं पादाब्जं यस्य तत्सम्बुद्धिः, किंच सौरभ्येण शय्यादिशब्दगुणेन अंचन् मनोज्ञः, अलंक्रियावान् उपमाद्यलंकारवान् अनवद्यो निर्दोषः एतत्प्रबन्धः अलंकारमंजरीनामकः तस्य प्रभो तद्वर्णनीयविजयीन्द्रेत्यर्थः । त्वद्यशः प्रद्योतते प्रकाशते, कीदृशं लोकालोकधराधरः चक्रवालपर्वतः तस्यापरे पाश्चात्या घना निबिडाः ये ग्रावाणः पर्यन्तपर्वताः तेषां आन्ध्यम् अचक्षुष्ट्वम् अप्रकाशः तस्य सैद्धाञ्जनसिद्धांजनस्य निवर्तकौषधस्य संबंधी स्थेमा स्थैर्यम्, तदाकल्पने तत्करणे कल्पशाखिभ्यः कल्पवृक्षेभ्यः सततोदंचंति सततोद्गतानि यानि लतांतानि पुष्पाणि तदुपमं तत्सदृशम् । 'पुष्पं सुमनसः फुल्लं लतांतं प्रसवस्सुमम्' इति धनंजयः । धावल्यादिष्टप्रदानाच्च तत्सदृशम् । उपमानशब्दस्योत्तरपदत्वे नित्यं तुल्यपर्यायत्वाल्लतान्तैः सदृशमित्यस्वपदविग्रहः । उपमाशब्दस्याकारान्तत्वे धर्मिवाचित्वेऽपि "स्युरुत्तरपदे त्वमी निभसंकाशनीकाशप्रतीकाशोपमादयः । उत्तरपरत्वे वाच्यलिंगाः" इत्यनुशासनाद्विशेष्यनिघ्नत्वम् । केचित्तु लतान्तैरुपमा यस्येति व्यधिकरणं बहुव्रीहिं वर्णयन्ति । चक्रवालगिरेर्बाह्यभागे चन्द्रसूर्य भानोरप्रसरादनपायं तमोरूपमांध्यम् । तत्रापि स्वप्रवृत्त्या निवर्तयदित्यर्थः । चन्द्रतुल्यस्य यशसश्चन्द्रदुष्करकार्यकृत्वाद् व्यतिरेकालंकारो व्यज्यते ।

यथा वा—

**अकलंककलेशोऽयं योगींद्रः प्रेजते यतः ।**
**सानाकं प्रयशो भास्य सकलाशा समेधते ॥**

अयं योगींद्रः अकलंककलेशः कलंकलेशरहितः (अकलंकः) अकलंकश्चासौ कलेशश्चन्द्रः यतः प्रेजते भाति, सा तादृशी अनाकंप्रा निश्चला सकलाशा पूर्णदिगन्तरा अस्य यशोभा कीर्तिकान्तिः आनाकं नाकमभिव्याप्य प्रायशः प्राचुर्येण अस्य भा कीर्तिरूपेत्यर्थः । समेधते ॥

**अकण्ठ्यमुदाहरति—**

**मुनीशितुर्नुतिर्भूतिर्भूमी विभुविभूतिधृत्(क्) ।**
**विधुद्युतिनुनुत्सुश्रीः भूरिशुद्धिविधिर्भुवि ॥**

मुनीशितुर्विजयीन्द्रस्य नुतिः स्तोत्रम्, भूतेर्वागादिसंपदः भूमी स्थानं विभुं व्यापिकां विभूतिं मोक्षरूपां धरति स्तोतृभ्यो धारयत इति तथोक्ता, धरतेः क्विप् तुगागमश्च । विधिद्युतिनुनुत्सुः चन्द्रकान्तिं निराचिकीर्षुः श्रीः शोभा यस्या विषयस्य साधिष्ठतया विमलेत्यर्थः । भुवि भूरिः प्रचुरः शुद्धिविधिः पावित्र्यविधिः यया सा भवतीति शेषः । यद्वा कर्तरि षष्ठी मुनीन्द्रकर्तृका नुतिः भूतिः श्रीः भूमी भूदेवी च तयोर्विभुर्विष्णुस्तस्य विभूतिरैश्वर्यं तां धारयतीति तथोक्ता । शेषं प्राग्वत् ।

यथा वा—

**ऊर्णुनूषुमुनिर्धीभिः दृष्टिश्रुतिविभुस्मितिम् ।**
**धृतिश्रीभिर्मुमुषिषुः पृथुमुर्वीभृदुच्छ्रितिम् ।।**

दृष्टिश्रुतयः सर्पाः तद्विभुः शेषः । तस्य स्मितिं गर्वं धीभिरुर्णनूषुः आचिच्छादयिषुः धृतिश्रीभिः धैर्यसंपद्भिः पृथुं महतीं उर्वीभृदुच्छ्रितिं पर्वतातिशयं मुमुषिषुः मोषितुमिच्छुः मुनिर्भवतीति शेषः ।

उक्तानां कण्ठादिस्थाननियमानां सुकरदुष्करभेदेन द्वैविध्यात् सुकरानुदाहृत्य दुष्करेषु दिङ्मात्रमुदाहरति—

**धन्योऽसौ भुवने यस्ते विजयीन्द्रयतीश्वरं ।**
**अघागहागा आहांगखगंगाकांकगाहगाः ।।**

अंग हे विजयीन्द्रयतीश्वर ! भुवने भुवने असौ धन्यः सुकृती यः अघागहाः । 'आशिषि हनः' इति हन्तेर्डः । किं च खस्य व्योम्नः गंगाका गंगैव । स्वार्थे कन् । 'केऽणः' इति ह्रस्वः । आदाचार्याणामित्यात्वम् । तस्या अंकः उत्संगः तत्र गाहः प्रवेशः तं गच्छन्तीति तथोक्ताः गमेर्डः । एवंभूतास्ते गाः तव वज्रान् अघपर्वतभेदित्वाद्गावो गिर एव गावो वज्राः गौर्वज्रे वाचि च । ताः य आह ब्रवीति स धन्य इति पूर्वेण सम्बन्धः । गंगाप्रवाहसदृशीस्तव सूक्तीर्य आह स धन्य इत्यर्थः ।

एवं स्थानानां नियमान् उदाहृत्य बन्धनियमेषु **चक्रबन्धमुदाहरति—**

**विद्यासु स्थितिविश्रुताहितसुधीसांद्रप्रथाकर्तरी**
**शस्या धीरपि जन्म यस्य तनुते स्फायच्छ्रियं विक्रमैः ।**

निस्तन्द्रस्स जयींद्राड् वितरणाधीशः परीतामृते
तेजो भावितमीशमात्मनि सदा रीतिक्रमैर्मन्यते ॥ .

विद्यासु चतुर्दशसंख्याकासु स्थित्या नैयत्येन विश्रुता प्रसिद्धा अहितसुधियां प्रतीपविदुषां या सांद्रा प्रथा निरंतरप्रख्यातिः तस्याः कर्तरी कृपाणी, छेदिका इत्यर्थः । यस्य विजयीन्द्रस्य धीर्ज्ञानं शस्या प्रशंसनीया। यस्य जन्मापि विक्रमैः प्रतिभटविबुधशक्तिभिः शास्त्रेषु विशृङ्खलप्रवर्तनैश्च स्फायन्तीं स्फायमानां श्रियं वर्धमानां कीर्त्यादिसंपदं तनुते विस्तृणीते। स्फायतेरनुदात्तेत्वलक्षण-मात्मनेपदमनित्यमिति परस्मैपदं प्रयुक्तम् (प्रायुंक्त) तथाच मुरारिः 'स्फायन्निर्मोकसन्धिप्रसकलविगलत्सम्मदस्वेदपूरा' इति। स तादृशः निस्तन्द्रः शास्त्रेष्वालस्यरहितः परीतानां परिगतानामाश्रितानामित्यर्थः । अमृते मोक्षे विषये वितरणाधीशः दानाध्यक्षः आश्रितमोक्षदायीत्यर्थः । जयीन्द्रराट् विजयीन्द्रयतीश्वरः तेजसा योगप्रभावेन(ण) भावितं चिन्तितं ईशं परमात्मानं आत्मनि मनसि रीतिक्रमैः योगशास्त्रोक्तप्रकारपरिपाटि(टी)भिः सदा मन्यते जानाति। अत्र षष्ठवलये विजयीन्द्रयश इति नेतृनामाङ्कनं तृतीयवलये सुधीन्द्रकवितेति कविनामांकनं कृतम् । बन्धलक्षणं तु अनुपदमेव वक्ष्यते ।

यथा वा—

रत्नश्रीरुचिराकृतिस्फुरदुरोरम्यप्रभावेन्दिरा-
सक्तं मुद्रिततृष्णया सरसया चित्तस्वपाकस्फुरा ।
वज्राद्दुष्करभाविभासुरशरातङ्किक्षपाटं धुरा
राजन्तं रजनीसहायवदनं रामं गिरामो गिरा ॥

रत्नश्रिया कौस्तुभकान्त्या रुचिराकृति मनोज्ञरूपं यत् स्फुरत् उरः निजवक्षः तेन रम्यः सर्वलोकदुर्लभः (प्रभावो) महिमा यस्याः सा । ब्रह्मादिभिः ध्यानेनापि दुरवगमो भगवान् स्वेन यतो वक्षस्याक्रान्तः तादृशप्रभाववती इन्दिरा लक्ष्मीः, तस्यां सक्तं वज्रादपि दुष्करभाविनः दुष्करस्वभाववन्तः ये शराः तैरातङ्किनः तप्ताः रोगिणो वा तादृशाः क्षपाटाः राक्षसा येन तम्, धुरा अतिशयेन राजन्तं भासमानं रजनीसहायः चन्द्रः इव वदनं यस्य तं रामं मुद्रिता नियमिता तृष्णा यया तादृश्या सरसया शृंगारादिरसवत्या भक्तिमत्या वा चित्तस्य स्वस्मिन् आत्मनि पाकः परिणामः

श्रवणमननध्यानाभ्यासाद्यतिशयलब्धो रामभावः तेन स्फुरतीति स्फूः तया गिरा वाचा गिरामः स्तुत्वानुभवामः इत्यर्थः । अत्रापि पूर्ववदेव वलयद्वयम् । तत्र च तृतीयवलये श्रीमुद्दुवेंकटः सप्तमवलये कृष्णविरचितमित्याहत्य श्रीमुद्दुवेंकटकृष्णविरचितमिति वर्तते । चक्रमिति शेषः ।

"श्रेयोगा रम्या च महत्प्रोथनशीलं मद्गीस्त्वाऽघुष्टक्रमवृद्भौगिपशालि ।
मन्द्रोक्तीनां व्यासमते भूरिमनोवा वाति श्रेष्ठं मत्तमयूरं शिखिनी वा ॥"

हे भूरि मनोवाः भूरिमनसं सर्वज्ञाचार्यं वाति गच्छतीति आदिगुरुत्वेन स्वीकरोतीति तथा । वातेः क्विप् । श्रेयांसं गच्छतीति श्रेयोगा । अत एव रम्या भोगिपः फणीशः तेन प्रोक्तम्, भौगिपं भाष्यं तद्व्याप्तुं शीलमस्या यथा तथा भौगिपशालिः घुष्टस्य विशब्दितस्य निरर्थकस्येति यावत् । वाक्यस्य क्रमे वर्तत इति तथा सा न भवतीति अघुष्टक्रमवृत् । यद्वा घुष्टक्रमं वृणोतीति तथा । वृणोतेः क्विप् तुगागमः । सार्थकवाक्यसंदर्भनिरता इत्यर्थः, मद्गीः मम वाक् व्यासमते वेदांतशास्त्रे मन्द्रोक्तीनां गंभीरवचसां श्रेष्ठं त्वा शिखिनी मत्तमयूरं वा मयूरमिव वाति गच्छति । वाशब्दः उपमानवाची । प्रायेण कवयः शार्दूलविक्रीडितेनैव चक्रबंधमारचयन्ति । तद् वृत्तान्तरेण मत्तमयूरनाम्नापि रचयितुं शक्यमित्युदाहरणान्तरमुक्तम् । अत्र द्वितीयचतुर्थषष्ठवलयेषु योगींद्रो धीशानो रघुनाथगिरिचक्रसहवृत्ते इति नेतृकविकाव्यनामानि द्रष्टव्यानि । पूर्वोदाहरणे वलयद्वयम् । इह वलयत्रयमित्यपि भेदः ।

यथा वा—

वंद्यश्रीतजनौ वशंवदकृतिश्रीसुप्तभोजप्रथो
विप्रा मध्वयतीशवाग्विदशिफद्वोधीनदायी भुवि ।
सुज्ञद्विष्टमहः प्रचारदरणीसान्द्रो जयीन्द्रं वरं
रम्योऽर्थावगताविति स्वसुखपाथोधिं प्रविख्यांत्यरम् ॥

विप्राः वरं श्रेष्ठं स्वसुखस्य परमात्मानन्दानुभवस्य पाथोधिं समुद्रं निधिं जयीन्द्रं अरं अलं प्रविख्यान्ति प्रकथयन्ति । मूलवालेत्यादिना लस्य रत्वम् । किमिति कथयन्ति अयं मध्वयतीशवाग्वित् मध्वयतीशस्य वाचं वेत्तीति तथा, वंद्यश्रीतजनौ वंद्यां प्रशस्तां श्रियम् इतां प्राप्तां जनिर्जन्म यस्यां वशंवदया कृतिश्रिया

प्रबंधनिर्माणचातुर्यसंपदा सुप्ता प्रच्छला भोजस्य प्रथा कीर्तिर्येन स तादृश इति च तथा शिफा मूलं न विद्यते यस्य स इवाचरन् अशिफन् स चासौ बोधश्च बाधितज्ञानं स एषामस्तीत्यशिफद्बोधिनः तेषामिनान् दुर्विद्वत्प्रभून् दातुं खण्डयितुं शीलमस्यास्तीति अशिफद्बोधीनदायीति च। तथा सुज्ञानां सुविदुषां द्विष्टाः विरुद्धाः तेषां तेषां महःप्रचारः तद्दरण्यां दरणे भेदने सांद्रः निरंतरोद्युक्त इति च। तथा अर्थावगतौ सर्वतंत्रार्थबोधे रम्य इति। यद्वा अरं शीघ्रं अर्थावगतौ रम्यः अविलंबितप्रतिभः इत्यर्थः। इति च प्रविख्यान्ति इत्येवमितिशब्दस्य प्रथमैकवचनान्तेषु प्रत्येकमभिसम्बन्धः। अत्र च द्वितीयवीथ्यां द्वितीयवर्णमारभ्य द्वितीयवलये ततः प्रथमायां तृतीयवलये तस्यामेव षष्ठवलये द्वितीयस्याष्टमवलये एवं चतुर्षु वलयेषु प्राज्ञप्रभुवंद्यश्रीमद्विजयीन्द्रं नौतीह सुधींद्रो वाचातिफणीशं इति तनुमध्यावृत्तमुद्धृतम्। अस्यार्थः वाचातिफणीशं शेषमतिशयानं प्राज्ञप्रभुभिः सुधीश्रेष्ठैः वंद्यं श्रीमन्तं इह च बंधेषु नौति सुधीन्द्रः स्तौतीति कविनेतृनामानि बन्धे इति स्पष्टमिति।

अपि च—

गिर्येणं चर भंग्यरातिनवबृंदंसुप्रभाणं त्रयी
विग्रोचक्रमजय्यसारनरहृद्याधीनसंशद्दिश।
जल्पा रंतुरसेव्यनून्ननयनिड्भेन्द्रस्य ते रश्मयो
योगिन्वागिनभावितस्वजयमायीराखुशय्याशय॥

हे योगिन् वागिनस्य वाक्पतेः भावितस्वजया प्राप्तस्वोत्कर्षा मायिनाम् इरा वाक् सैवाखुशय्या तस्याश्शयो अजगर! मायिवाचां तुच्छीकरणपटो! इत्यर्थः। सुप्रभाणं शोभनवाग्गुंभं अरातीनां वैरिविदुषां नवबृंदं भंगि भंगवत् गिरि वाचि एणं मृगं मूढं सत् चर कुरु। त्रय्याः वेदस्य विग्रोचक्रमेण अर्थापहारक्रमेण जय्यः सारो येषां ते ते च ते नराः तेषां हृदि असंशत् अशीर्णस्सन् अनाक्षिप्तः सन् शद्लृ शातने इति धातुः। आधीन् मनोरोगान् दिश। तद्विधौ तव शक्तिरस्तीत्याह। रन्तुः वादकलहे क्रीडितुः असेव्यः निन्द्यः नून्नः नयः अर्वाचीनशास्त्रं स एव निट् निशा। पद्दन्न इति सूत्रे पदादयः पृथक् शब्दाः इति मतान्तरम्। तस्या एव निशः रात्रेः भेन्द्रस्य सूर्यस्य ते जल्पाः वादाः रश्मयः किरणाः खलु।

अत्र प्रथमवलये विजयीशयोगी तृतीयवलये चरणं शरणं, षष्ठवलये भजसे सुधीन्द्र, नवमे यतिरद्ववर, इति प्रमिताक्षरार्धमुद्धृतम्। चक्रं तु भासते इति नेतृकविकाव्यनाम विन्यस्तम्।

अस्योद्धारक्रमः—

लिखित्वा वर्तुलाकारा दशरेखास्तदन्तरे।
रेखायुग्मेन विलिखेत् तिस्रो वीथीरमूषु च॥
प्रथमायां पादमाद्यं द्वितीयायां द्वितीयकम्।
तृतीयायां तृतीयं च प्रादक्षिण्यक्रमाल्लिखेत्॥
एकमेव लिखेन्नाभौ त्रिपादीदशमाक्षरम्।
चक्रस्य मण्डले बाह्ये तृतीयस्यान्त्यमक्षरम्॥
चतुर्थस्यादिमं कृत्वा बाह्यवीथ्यन्तरालगैः।
आद्यन्तगैश्च पादानां तुर्यः पादाक्षरैर्भवेत्॥
कविकाव्यादिनामानि वलयेषु यथारुचि।
विन्यसेच्चक्रबन्धोऽयं चित्रवेदिभिरीरितः॥

अथ हारबन्धः

लोकालोकावकाशे कृतिपतियतिनस्तारहारस्वरंधः
क्षीरांभोराशिराजामरवरतुरगाकाशकेशप्रशस्तम्।
लोलाक्षीलाभिलाषाक्रमशमनमतेः श्लोकमाकल्पकल्पं
नौमि स्वामित्रमित्रं हृदि तमुदितदिशां ध्येयगेया श्रियस्तम्॥

लोलाक्षीषु स्त्रीषु इलायां भूमौ च योऽभिलाषाक्रमः इच्छानुपूर्वी तस्य शमनं शान्तिसाधनं शमनी शमयित्री वा मतिर्यस्य तस्य हृदि ध्येया चिन्तनीया पवित्रत्वात् गेया स्तुत्या अभ्यार्हतत्वात् श्रीर्यस्य तस्य कृतेरलंकारमंजर्याः पतिः प्रभुः सचासौ यती च विजयीन्द्र इत्यर्थः। तस्य ताराणि नक्षत्राणि हाराः मौक्तिकावयवाः स्वरन्धः स्वर्गात्रं सुधा क्षीरांभोराशिः राजा चंद्रः अमरवरतुरगः इंद्राश्वः आकाशकेशः रुद्रः भस्मोद्धूलनधवलः तैः प्रशस्तं श्लाघितं तेभ्योऽपि धावल्यातिशयादिति भावः। मुदितानां दिशामाकल्पकल्पं चंदनालेपाद्यलंकारसदृशं स्वामिनं त्रायते रक्षति

शाश्वतं करोतीति तादृशं मित्रम्। यद्वा स्वामित्रैः स्वप्रतिभटैः तारहारादिभिः प्रशस्तत्वात् तेषामपि मित्रं सुहृदं तं श्लोकं कीर्तिं नौमि स्तौमि ॥

यथा वा—

**वंदेऽहं देवदेवं नुतिनतिकृतिभिः कामधानप्रमर्दि-**
**श्रीभाजं भावभाजां सुरवरसरणिध्येयगेयप्रयत्नम्।**
**वंशे स्वांशेन शेषे परपुरहरणे ज्ञातजातव्रतं श्री-**
**रामं श्यामं स्वमंत्रश्रुतिमतिधृतिमद्धीरधीरम्यरत्नम्॥**

देवदेवं देवेश्वरं, कामस्य धाम सौंदर्य प्रमृद्गातीति कामधामप्रमर्दिनी श्रीः शोभा तां भजतीति तथोक्तं नुतिः स्तुतिः नतिः नमस्कारः तयोः कृतिभिः करणैः भावभाजां अभिप्रायजुषां, भक्तिभाजामित्यर्थः। सुरवरः मरुदंशत्वात् सुरश्रेष्ठो मध्वाचार्यः तस्य सरण्या मार्गेण तत्सिद्धान्तेन ध्येयः गेयः प्रयत्नः जगत्सृष्ट्यादिकृतिः यस्य तं, स्वस्यांशः स्वांशः स चासाविनः सूर्यः तच्छेषे तदंशभूते वंशे कुले सूर्यवंश इत्यर्थः। जातं प्रसिद्धम् जातम्, 'अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम' इति कृतं व्रतं नियमो यस्य तं श्रीरामं श्रीकांतं श्रीमंतं रामं वा श्यामं स्वमंत्रस्य श्रुतिमतिधृतिमतां श्रवणमननधारणवतां धीराणां विदुषां धियो रम्यं चारुतया विषयं रत्नं एतादृशं देवदेवं वन्दे स्तौमि नमामि च।

अस्योद्धारः—

**समत्रये तृतीयादौ नवमाद्यसमत्रये।**
**समत्रये षोडशादौ वर्णानामेकरूपता॥**
**एवं चतुर्षु पादेषु स्रग्धरायामयं कृतः।**

लेखनप्रकारस्तु—

**आयतं मंडलं कृत्वा रेखायुग्मेन पार्श्वयोः।**
**द्वितीये तिर्यगाकारं कोष्ठे मंडलमालिखेत्॥**
**तत्र वर्णद्वयं पार्श्वकोष्ठयोरेकमन्तरा।**
**पंचमाष्टमयोरेवमेकादशचतुर्दशे।**
**एवं सप्तदशे त्वष्टादशे त्वर्धं समापयेत्।**

मेरौ कृत्वार्धयोराद्यं वर्णखमितः परम्।
पूर्वार्धे स्युः षडेवं च खान्येवं तदुत्तरे।
हारबंधोऽयमाख्यातो रीतिभेदोऽपि दृश्यते।
द्वौ वर्णौ मौक्तिकीकृत्य ततो खमिति क्रमः।
एवं द्विधा हारबन्धो योज्यो वृत्तांतरेऽप्ययम्॥

ध्येया देया दयाढ्या जगदगदगतिर्नीतिरीतिस्थितिज्ञैः
धीरा सारादराणां नतिकृतिकृतिनां चा सतां सर्धि संघैः।
सीता शीतायिताक्ष्णा सकृदकृतकृषा श्रीरसारस्थरक्षः
सेनासानाय नानाघृणरणगणकृन्नायिकाय श्रियंतः॥

सारादराणां स्थिरभक्तीनां नतिकृतिकृतिनां नमनविधिपटूनां सतां सत्पुरुषाणां नीतिरीतिस्थितिज्ञैः नयप्रकारमर्यादाभिज्ञैः संघैः सर्धि सानंदं यथा तथा ध्येया चिन्तनीया दयाढ्या या जगतामगदगतिः अनपायगतिः सा श्रीरसारस्थानां अन्यायनिरतानां रक्षसां सेनायाः सानाय अन्तकर्मणे अवसानाय नानाघृणम् अघृणं निर्दयं रणगणं युद्धसमूहं करोतीति तत्कृत् नायकः रामो यस्याः सा सीता अकृतं दुष्कृतं कृषति नाशयतीति तथा "कृषेः क्विप्" शीतयितेन शीतलीभवता अक्ष्णा अयश्रियं शुभविधिसंपदं देयात् ददातु। निरोष्ठ्यश्चायम्। वृत्तान्तरेप्यूह्यम्। तथाहि—

वसन्ततिलकावृत्ते

श्रीदस्सदभ्युदयदोदरदस्युदर्प-
मोदस्यदच्छिदयमादथदद्यदक्षः।
गामभ्यमन्यमवतामयमप्यमर्त्य-
धामद्रुमश्च महितो महमत्र मव्येत्॥

यमवतां योगिनां महितः पूजितः श्रेष्ठ इत्यर्थः। 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः। 'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी। अयमपि यतीन्द्रः अमर्त्यधामद्रुमश्च गां भुवं स्वर्गं अभ्यमन् अध्यगच्छन् अत्र च गवि दिवि भुवि च महमुत्सवं मव्येत् बद्धुं (बन्धुं) शक्तः। मव्यतेः शकि लिङ्। स कीदृशः श्रीदः संपत्प्रदः। सतां पुण्यवतामभ्युदयं ददातीति सदभ्युदयदः अदराः निर्भयाः दस्यवः

शात्रवः असुराः प्रतिवादिनश्च तेषां दर्पमोदस्य दान् गर्वहर्षवेगान् छिनत्तीति तथा। अयं शुभविधिं आश्रितानामादधत् पुष्णन् दक्षश्चतुरः।

अथाष्टदलपद्मबन्धमुदाहरति—

**रातावत्यासदः श्रीविजयिवर वराश्रीविभुज्ञानसारा-**
**रासानज्ञा भुविश्रीभरविजितपरा श्रीरसद्भावधारा॥**
**राधावद्भासरक्षी जयिकृतिरधराक्षेपशिक्षावतारा-**
**रातावक्षाशिपक्षेरितविहतिहरा श्रीद सत्यावतारा॥**

रातौ दाने श्रीद कुबेर! हे विजयिवर तव जपिनी कृतिः जयिकृतिः प्रबन्धः आसदः सदोऽभिव्याप्य, अभिविधावाङ्, समासोऽव्ययीभावः। सर्वत्र राता ख्यापितेत्यर्थः। रा दाने इत्यस्मात् कर्मणि क्तः। श्री विभोः लक्ष्मीपतेः विषयीकृतस्य ज्ञानेन सारा श्रेष्ठा श्रीविभुरयमिति ज्ञानेन सारा रासानां शब्दानामनज्ञासु शब्दरचितेत्यर्थः। रासं रस समूहः तस्यानज्ञा सर्वरसाभिज्ञेति चार्थः। राधापक्षे रासक्रीडाभिज्ञेति चार्थः। भुवि श्री भरेण शोभनातिशयेन संपदतिशयेन विजिताः परे विबुधाः यया सा, विजिताः परा अन्यस्त्रियो यया सा। क्षीरवत् सती प्रशस्ता भावधारा अभिप्रायधोरणी यस्यां सा, भासं ज्ञानं कांतिं च रक्षतीति भासरक्षी, रक्षतेः कर्मण्यण् ततो ङीप्, अधरेषामधमानामाक्षेपशिक्षासु अवतारो यस्याः सा, अधराक्षेपे कृष्णाधरग्रहणे शिक्षाया अवतारः प्रवृत्तिः यस्याः सा, अरातौ शत्रौ अक्षासिनां व्यवहारव्यापिनां वादिनामित्यर्थः। पक्षेण ईरितां विहतिं हरतीति तथा, अक्षासिनां अक्षदेविनां पक्षेण ईरितविहतिहरा, सत्यावतारा तथ्यावतारिका, सत्यभामावतारवज्जयिनी कृतिः। राधावत् अवति प्रीणाति, औचित्यात् हरेर्मन इति शेषः।

अयं चाष्टदलपद्मबन्धः विदिग्दलानां प्रवेशाप्रवेशाभ्यां द्विविधः। तत्राद्य उक्तः।

कर्णिकायामप्रविष्टविदिग्दलो यथा— अत्रैव पाठान्तरेण—

**रातावत्यासदश्रीविजयिवरमनःश्रीविभुज्ञानसारा**
**रासानज्ञाभुविश्रीगलविधृतकलाक्षीरसद्भावधारा।**

राधावद्धासरक्षी विजयिकृतिरधिक्षेपशिक्षावतारा
रातावक्षासिपक्षेरितविहतिहरा श्रीद सत्यावतारा ॥

अत्र प्रायेण पूर्ववदेवार्थः विशेषस्तु लिख्यते । श्रियो लक्ष्म्याः विजयी चासौ वरः पतिः तस्य मनः अवति प्रीणातीति श्रीगलः श्रीकण्ठः स इव विधृतकला विधृतज्ञाना "कला शिल्पे वित्तवृद्धौ चंद्रांशे कलने लवे । महाभूतेष्विन्द्रियेषु ज्ञानावयवयोरपि" इति वैजयन्ती । अक्षान् पाशकान् अश्नुवन्ति दीव्यन्तीति अक्षाशिनः अक्षदेविनः तत्पक्षे ईरिता प्रोक्ता विहतिर्लीला यस्याः सा अक्षदेविनीत्यर्थः । अक्षाशिनां वादव्यापिनां पक्षे ईरित विहतिः प्रवर्तितविहारा हे श्रीद विजयिवर ! तव विजयिनी कृतिर्जयति ।

यथा वा—

एते सद्वादसभ्या दधति मुदमये व्यासपक्षे सुनाये
येनासुक्षेप सव्याहतिररितनये व्यालगद्भावहाये ।
येहावद्धागलव्या त्वयि मतिरभये स्फातिमत्यायता येऽ
येतायत्यामतिस्फा विजयिवर दयेभ्यासदद्वासतेये ॥

हे दयेभ्य विजयिवर ! चतुर्थपादादावकारप्रश्लेषः अयेतायत्यां अयं शुभविधिं इता प्राप्ता च सा आयतिःप्रभावः । 'स्यात्प्रभावेऽपि चायतिः' इत्यमरः । तस्यामतिस्फाः अतिप्रवृद्धः "स्फायतेः कर्तरि क्विप्" असुक्षेप सुखेन क्षेप्तुमशक्य अये विजयिवर ! विजयीन्द्र ! ये विद्वांसस्ते तव सुनाये शोभननीतियुक्ते व्यासपक्षे वेदान्तशास्त्रे सद्वादसभ्याः सदालापसहायाः ते मुदं दधति, येन शास्त्रेण सव्याहतिः व्याहत इत्यर्थः । अरिः प्रतीपबुधः भावहाये जहाति त्यजतीति हायः । 'श्याद्व्यधे'ति णप्रत्ययः । भावस्य हायः भावहायः सत्त्यशून्य इत्यर्थः । तस्मिन्नये निषिद्धशास्त्रे व्यालगत् व्यासक्तः या ईहावद्भाक् ईहावन्तः चेष्टावन्तः प्राणिनः तान् भजतीति तद्भाक् प्राणिमात्रश्रेष्ठेत्यर्थः । या मतिस्सा अलव्या अच्छेद्या सती अभये निर्भये अत्यायतः आयो विद्यातिलाभो यस्य तस्मीन् वासतेये वासयोग्ये 'पथ्यतिथिवसतिस्वपतेर्ढञ्' विद्याश्रय इत्यर्थः तादृशे त्वयि स्फातिं वृद्धिं आसदत् प्रापत् सदेर्लुङि लृदित्वात्च्लेरङ् ।

एतमेव वृत्तान्तरे निबध्योदाहरति—

समताश्रयंसाभ्यास सभ्यासादितसाहस ।
सहसातिकृपोल्लास सल्लापोदस्ततामस ॥

समतायाः सर्वतन्त्रेषु तुल्यत्वस्याश्रये साभ्यासं सपरिचयं सभ्यं सभायोग्यमासादितं प्राप्तं साहसं शक्तिर्येन सहसा शैघ्र्येण अतिकृपोल्लास प्रतिवादिनां भंगे सति शिष्येषु वा अतिमात्रदयोदय सल्लापेन उदस्तं निरस्तं तामसं तद्गुणो येन स्वेन सह सल्लापे सति शिष्याणामज्ञाननिवृत्तिर्भवतीत्यर्थः । अत्र सर्वत्र संबुद्धिः । विजयीन्द्रयते इति शेषः ।

यथा वा,

मारधामावनीभूमा माभूनीरभवार्यमा ।
मार्यवारिततीरामा मारातीस्त्वं सुधा रमा ॥

सुध सुखेन धारयितुं शक्य हे राम मामव रक्ष । कीदृशस्त्वं मारधामा मारस्य **धामेव** धाम शोभा यस्य सः, अवन्याः पृथिव्याः भूमा अतिशयो येन सः, मा लक्ष्मीः भूः भूमिः ते एव नीरभवे जलजे तयोः अर्यमा सूर्यः, मारी- अव- अरितती: राम- अमाः रातीः इति च्छेदः अमाः अलक्ष्मीः रातीः ददतीः अरिततीः शत्रुसमूहान् मारी अवश्यं मारयिता, लोकदुःखहेतून् शत्रुसमूहान् नाशयिता इत्यर्थः मारयतेरावश्यके णिनिः । अकेनोर्भविष्यदाधमर्ण्ययोः २-४-७० अकेनोरित्यादिना षष्ठीनिषेधात् द्वितीया । अत्र विशेषणानां विधेयत्वात् सम्बुद्धेरभावः ।

यथा वा

मारसूर्लघुमानामा मानामात्प्रोथयेत्समा ।
मासयेत्परतासीमा मासीताविभुसूरमा ॥

मारसूः कामजननी लघुः इष्टः मानः चित्तसमुन्नतिः यस्याः सा सर्वलोकप्रियहृदयोल्लासा इत्यर्थः । मा मां आनामात् प्रणामाद्धेतोः प्रोथयेत् प्रीणयेत् प्रोथृ– पर्याप्तौ । आसीताविभु । मर्यादायाम् अव्ययीभावः । श्रीरामपर्यन्तस्य सर्वप्रपंचस्य सूः जननी समा तुल्या रमा लक्ष्मीः परतासीमां निरतिशयोत्कर्षं मासयेत् परिणमयेत् मस- परिणामे ।

अद्याष्टदलस्योद्धारः—

कर्णिकायां लिखेदेकं षट्षड् दिक्षु विदिक्षु च।
प्रवेशनिर्गमौ दिक्षु वा विदिक्षु प्रवेशनम्।
अप्रवेशे तु सप्त स्युः वर्णास्सर्वविदिक्ष्वपि।
क्रमोऽयं कविभिः प्रोक्तः स्रग्धरा षड्दलाम्बुजे॥

आनुष्टुभे तु—

कर्णिकायां लिखेदेकं द्वौ द्वौ दिक्षु विदिक्षु च।
प्रवेशनिर्गमौ दिक्षु कुर्यादष्टदलाम्बुजे॥

अथ षोडशदलपद्मबन्धमुदाहरति—

विद्याविभुविधौ विद्या विनिविष्टा विभाविताः।
विना विष्णुविधी विश्वविज्ञाविर्भुवि के विदुः॥

विश्वविज्ञस्य सर्वज्ञाचार्यस्य आविर्भुवि सन्निधानं यस्मिन्तस्मिन् विद्याविभुः पूर्वनाम्ना विद्यापतिर्विजयीन्द्रः स एव विधुश्चन्द्रः तस्मिन् विनिविष्टाः स्थिताः विभाविताः प्रख्याताः विद्याः विष्णुविधी हरिब्रह्माणौ विना के अन्ये विदुः न केऽपीत्यर्थः।

यथा वा,

रसारमारतौ रक्तरक्षोगणरयारम।
रविरम्यारजोरक्षरघुरत्नारतेरमुम्॥

रसारमा भूलक्ष्मीः भूजालक्ष्मीरित्यर्थः। यद्वा रसा च रमा च तयोः रतौ रक्तरक्षसां रणरयस्य रणवेगस्य, आमयति विरमयतीति आरम, रविरम्य रविवत्प्रकाशमान, अरजः हे रजोगुणरहित, रघुरत्न रघुश्रेष्ठ रक्ष्यं पालनीयं मामिति शेषः। अरतेः दुःखात् अव रक्ष।

अस्योद्धारः—

कर्णिकायामेकमेव न्यस्तं प्रतिदलं यदि।
एकांतरसमं वर्णं तत् षोडशदलाम्बुजम्॥

इदं(दं)यमितोऽपि बहुविधः कर्तुं शक्य इत्याह—

पद्मबन्धो बहुविधो दिङ्मात्रमिह दर्शितम् -

तथाहि

**न्यानह्यानंजनर्ध्या नतनरनलिनस्त्यानमानर्तनद्धा**
**अद्धानन्तानन्दनम्रा नयनयनकनद्धानजानज्जनस्वा ।**
**स्वानस्मानभ्यनक्त्वैनसनगनशनप्यानदृङ्नर्मनद्याऽऽ**
**द्या नम्या नः पुनर्मानघनवनघनध्यानगेनर्यनन्या ॥**

मा लक्ष्मीः स्वान् स्वाश्रितान् अस्मान् ऐनसं पापसमूहः तदेव नगः वृक्षः तस्य नशनं नाशकरणं प्यानं वृद्धिः यस्याः सा चासौ दृङ्नर्मनदी तया दृग्विलासापगया अभ्यनक्तु सिञ्चतु । कीदृशी नताः नराः एव नलिनानि तेषां स्त्यानं संघम् अनञ्जनर्द्ध्या निर्दोषसम्पदा न्यानह्य सम्बध्य आनर्ते नर्तने नद्धा सन्नद्धा अद्धा तत्त्वम् अनन्तेनानन्देन नम्रा अनवधिकानन्दपूर्णा, नयः शास्त्रमेव नयनं तेन कनद्धानाः दीप्तबोधाः ते च ते जानज्जनाः ज्ञानिजनाः ते स्वाः बन्धवः यस्याः सा आद्या जगत्कारणभूता नः अस्माकं पुनः नम्या वंद्या अनघं नमनं निर्दोषा स्तुतिः घनं निरन्तरं ध्यानं ते उभे गच्छतीति अनघनमनघनध्यानगः तस्मिन् नरि अनन्या अविनाभूता ।

अयं चत्वारिंशद्दलपद्मबन्धः—

**कर्णिकायामेकमेव न्यस्तं प्रतिदलं यदि ।**
**एकान्तरसमं वर्णं चत्वारिंशद्दलाम्बुजम् ॥**

अयमेव नागबन्धो हारबन्धो गोमूत्रिकाबन्धश्च । अस्मिन् हारबन्धे एकान्तरो मणिर्बन्धव्यः । इतरौ वक्ष्यमाणौ ।

अष्टदलपद्मेऽप्येवं प्रकारोऽस्ति— यथा—

**रजसा चरतामाररमाताम रमावर ।**
**रवमार्यारभासार रसाभा स्फुर साजर ॥**

रजसा पापेन चरतां जनानाम् आररमां शत्रुसमूहश्रियं अतति सततं गच्छतीति आररमात तत्सम्बुद्धिः, अत सातत्यगमने इत्यस्माद्धातोः पचाद्यच्प्रत्ययः । पष्ठ्यन्तेन

समासः। मा मितिर्न विद्यते यस्य तत्सम्बुद्धिः अम। रवेण शब्दमात्रेण मार्याः मारयितुं शक्याः आरभासाराः शत्रुसमूहप्रतापबलानि येन तत्सम्बुद्धिः। साजर अजरैर्देवैः सहितः तत्सम्बुद्धिः। रसेन वीर्येण आभासयति इति तथा (रसाभाः) भासेः क्विप् तत्सम्बुद्धिः। हे मावर लक्ष्मीपते स्फुर प्रकाशस्व ममेति शेषः।

**मनसा स्वमते राममरातेरमता द्रम।**
**मद्रतारमनुक्षेमयक्षेनुत्तानसानम॥**

हे स्वमते अरातेः शत्रुभूतस्य मोहादेः अमता अवश्या सती रामं द्रम भज, द्रम गतौ। मद्रस्य मंगलस्य तारमनोः तारकमन्त्रस्य क्षेमं शोभनं अभिधेयमित्यर्थः। अक्षे इन्द्रियेऽनुत्तामसा अनुद्रततामसगुणा सती मनसा रामं नम नमस्कुरु। अत्र द्वयेऽपि दिक्षु प्रवेशनिर्गमौ विदिक्षु प्रवेशमात्रमिति विशेषः।

नागबन्धमुदाहरति—

**वन्दे कर्मन्दिमौलिव्रततिनवनयायीनसज्जीकृतोरु-**
**स्तोत्रश्रीभाजमिष्टाकलनघनयशश्शालिनं श्रीजयीशम् (जयीन्द्रम्) ।**
**शं याचे कृत्यनूनत्रसदसदहितस्वामिनं दिव्यशक्त्या**
**तत्त्वश्रीवासनाया:(यां) चिरतरगुरुतानूत्नभाग्येतभावम्॥**

कर्मन्दिमौलीनां मस्करीन्द्राणां व्रततेः समूहस्य नवनं स्तुतिं यान्ति स्तोतृत्वेन भजन्तीति नवनयायिनः ते च ते इनाः प्रभवः, तैः सज्जीकृतस्य सन्नद्य प्रयुक्तस्य उरुणो महतः स्तोत्रस्य श्रियं संपदं भजति स्त्युत्यत्वेनांगीकरोतीति तथोक्तं; इष्टाकलनेन अभीष्टदानेन घनं निरंतरं यशः शलति गच्छतीति तथोक्तम् 'ताच्छील्ये णिनिः' श्रीजयीन्द्रं वंदे। तथा कृतिभ्यः प्रबन्धेभ्यः अनूनं भृशं त्रसंतः असंतश्च ते अहितस्वामिनः प्रतिकूलवादिश्रेष्ठाः येन तथाभूतम्। दिव्यशक्त्या असाधारणबोधवैभवेन तत्त्वश्रियः परतत्वसंपदः वासनायाः ध्यानादिपरिचयस्य चिरतरगुरुतया अतिचिरंतनोत्कर्षेण नूत्नं नूतनं यद्भाग्यं पुण्यं तेन इतभावं प्राप्तजन्मानं अवगताभिप्रायं। यद्वा तत्त्वश्रीवासनायाः चिरतरगुरुतया आजानसिद्धेन आचार्यकेण नूत्नभाग्येतभावमिति पूर्ववदर्थः। शं (सुखं) याचे(ऽहं) प्रार्थये॥

यद्वा—

**विद्याविख्यातकीर्तिप्रसरसितसितालोकशर्वायमाण**
**स्वाकृत्येकाब्धिवद्भावि जगदगमितस्फूर्तिभूयोऽवलोके ।**
**के वस्त्वायन्ति नाष्टाकृतिशरशशिदुग्धावदातं वितर्कात्**
**सत्त्वं योगीश ते वक्तुमलमनणकानाणकास्वादुभावि ॥**

हे योगीश! ते विद्याविख्यातायाः कीर्तेः प्रसरः समूहः तस्य सितसितालोकेनातिधवलकान्त्या शर्वायमाणा रुद्रवदाचरन्ती भसितालेपन-धवलस्य शिवस्याष्टमूर्तित्वेन विश्वव्यापित्वसाम्यादुपमानत्वं, सा चासौ स्वस्याकृतिः कीर्तेस्स्वरूपतया एकाब्धिवद्भावि एकार्णवसाम्यवत् अगमितस्फूर्ति· अनवधृतवस्त्वंतरस्फुरणं जगत् भूयो बहुशः अवलोके पश्यामि। तथाहि अष्टाकृतिशरशशिदुग्धावदातं हरकाशपुष्पचन्द्रक्षीरवद्धवलं वस्तु के वा वितर्कात् एवं स्यादित्यूहात् नायन्ति नावगच्छान्ति सर्वेऽप्यूहादेव तत्तद्वस्तु जानन्ति, न तु स्वरूपतः तस्मात् ते स्वादुभावि माधुर्यवत् मनोज्ञमित्यर्थः। ते सत्त्वं प्रभावं अनणकाः उत्तमा एव वक्तुमलं समर्थाः नत्वणका अधमाः ॥

नागबन्धः प्रकारान्तरेणापि दृश्यते—

**रामो रक्तारविन्दच्छदसदृशदृशालोकनत्रातलोको**
**भूकन्याकल्पवल्लीरचितनुतमहानन्दकायोज्ज्वलो नः ।**
**लंकेशस्फीतशैलप्रकलनघनबाणाग्र्यवज्रो रणेहा-**
**मोदश्रीयोग्यनम्राशरवरवधको लालयेत्कं घृणाढ्यः ॥**

रक्तारविंदच्छदस्य कोकनददलस्य सदृश्योर्दृशोरालोकनेन वीक्षणेन त्राताः रक्षिताः लोकाः भुवनानि येन सः। रक्तशब्देन अरविंदशब्देन च दशवदनरोषकषायितत्वम्, प्रणतलोकदयाभरस्मेरत्वं च दृशोर्व्यज्यते। भूकन्या सीता सैव कल्पवल्ली, आश्रिताभीष्टदानात् कल्पलतासादृश्यम्। तया रचितः निर्मितः नुतः स्तुतिमुखरैः ब्रह्मादिभिः स्तुतः महानंदानां निरतिशयानंदानां कायः समूहः तेनोज्ज्वलः लंकेश एव स्फीतशैलो महापर्वतः तस्य प्रकलने भेदने घनाः कठिनाः बाणाग्र्या बाणश्रेष्ठा एव वज्रा अशनयः यस्य सः। रणेहायां रणोद्योगे मोदश्रीयोगिनः हर्षप्रकर्षयुक्ताः अत एव अनम्रा उद्धताः ते च ते आशरवराः

राक्षसश्रेष्ठाः तेषां वधको हिंसकः अनम्रराक्षसहिंसकत्वोक्तिः प्रणतविभीषणादि-राक्षसरक्षकत्वाभिप्राया, अत एव घृणाढ्यः एवंभूतो रामः नोऽस्माकं कं सुखं लालयेत् । लल ईप्सायां दातुमिच्छेदित्यर्थः ।

अस्योद्धारः—

कोशानादिचतुष्कोणे प्रथमं नव कोष्ठकान् ।
तिर्यगूर्ध्वचतूरेखाछ्तस्त्रो घट्टकान् लिखेत् ॥

ऐशानघट्टकस्याद्यं तिर्यग्रेखाद्वयं ततः ।
आग्नेयघट्टाग्रतिर्यग्रेखायुग्मेन योजयेत् ॥
एवं नैर्ऋतवायव्ययोजनात्तदनन्तरम् ।
वायव्यैशान्यघट्टोर्ध्वदक्षिणोत्तररेखयोः ॥
योजनाव्युत्क्रमादेवं नैर्ऋताग्नेययोरपि ।
ऐशानवायव्याद्यंततिर्यग्रेखाद्वयं ततः ॥
योजयेद्बहिरेवं तु नैर्ऋताग्नेययोरपि ।
वायव्यनैर्ऋतस्योर्ध्वदक्षिणोत्तररेखिके ।
बहिर्युज्याच्चतुष्कोणेऽप्येवं स्यात्तिर्यगूर्ध्वयोः ॥
आग्नेयैशानघट्टोर्ध्वं दक्षिणोत्तररेखिके ।
स्वस्तिकीकृत्य सर्पस्य मुखवत्पुच्छवल्लिखेत् ।
नागस्य संधेरारभ्य स्रग्धरां विलिखेत् क्रमात् ।
सरूपसंधिवर्णाढ्यं पुच्छसंधौ समापयेत् ।
चित्रविद्भिरयं बंधो नागबंध इतीरितः ।

अत्राद्यमुदाहरणद्वयमेकनागपक्षे, तृतीयं तु नागद्वयपक्षे बोद्धव्यम् (बंधव्यम्) । तत्र नागयोः शिरस्संधौ तदधःकोष्ठयोरिव पुच्छयोस्संधौ तदुपरि कोष्ठयोरपि वर्णत्रयम् । पूर्वत्र द्वये एव पुच्छशिरसोरेव संधिरिति भेदः ।

अथ खड्गबंधमुदाहरति—

वारिजारिहारिकान्तिकीर्तिपूर्तिनर्तिता
तादृशावनीशलालसच्चकोरसन्तते ।

तेजसांजसा जयीन्द्रमौनिचन्द्र गुम्फि(म्भि)ता
तावकेन भूनभोऽन्तरालभूर्वि (भास) राजते ॥

अवनीशा एव लालसन्तः भृशं लसन्तः चकोराः तेषां सन्ततिः समूहः तादृशी तादृग्विधा त्वदालोकायत्तहर्षा, अवनीशलालसच्चकोरसन्ततिः यस्य तत्सम्बुद्धिः । हे जयीन्द्रमौनिचन्द्र ! तावकेन त्वदीयेन तेजसा गुंभिता निबिडिता वारिजारिः चन्द्र इव हारिणी मनोज्ञा कान्तिः यस्याः सा कीर्तिः तस्याः पूर्तिः पूरः तया नर्तिता नृत्यंतीकृता प्रहर्षितेत्यर्थः । प्रहृष्टः किल नृत्यतीति भावः । यथा वा—

भो यजेय ते यतीश लीनभेनभूनभा
भासते दिशा दशावरूद्ध्य बुद्धिसंभवा ।
वा भयाद्धि बुद्ध्यभावसादवादिवित्सभा
भाऽसमादिवादभावसाध्यसिद्धिवैभवा ॥

भोः अजेय ! परिभवाविषय यतीश ! 'भो भगो' इति रोर्यत्वे तस्य 'ओतो गार्ग्यस्य' इति लोपे प्राप्ते 'व्योर्लघुप्रयत्नतर' इति पक्षे यकारश्रवणम् । ते तव भा यशोरूपा भासते । कीदृशी ? लीनानि भेनभूनभांसि भेनौ चन्द्रसूर्यौ भूनभसी च तानि यया सा बुद्धिसंभवा वाभयाद्धि विकल्पनभयादेव 'उपमायां विकल्पे वा, हि हेतावलधारणे' इत्युभयत्राप्यमरः बुध्यभावेन सादो विशरणं व्याहतिर्यस्याः सा वादिविदां सभा यया सा, असममसाधारणमादिवादस्य चिरंतनवचसो वेदस्येत्यर्थः । भावस्याभिप्रायरूपस्य साध्यस्य फलस्य सिद्धिवैभवं सिध्यतिशयो यस्याः सा तादृशी भा कीर्तिरूपा कांतिः दश दिशा अवरूध्य आवृत्य भासते ॥ अस्योद्धारः—

एककोष्ठं पुरश्शंकुं त्रिकोष्ठं फलकं तिरः ।
त्सरुमूर्ध्वत्रिकोष्ठं च ततः कुर्यात् त्रिकोष्ठकम् ॥
द्वितीयं फलकं कृत्वा तिस्रो वीथीस्ततो लिखेत् ।
कोष्ठकैः पंचदशभिः खड्गाकृत्योर्ध्वमायताः ॥

अक्षरविन्यासक्रमस्तु—

शंकावेकं पार्श्वयोर्द्वौ त्रीन् वर्णान् फलकान्तरे ।
समानरूपानावर्त्य त्रीन् मुष्टौ विलिखेत्ततः ॥

**द्वितीयफलकस्य द्वौ पार्श्वयोरंतरे त्रिकम्।**
**सरूपमावर्त्याथाद्यं पादं खड्गादिकोष्ठके।**
**समाप्यास्यान्तिमं वर्णं द्वितीयादिं विधाय च।**
**द्वितीयमानुलोम्येन तृतीयं प्रातिलोम्यतः।**
**चतुर्थमानुलोम्येन त्रीन् लिखेद्वीथिका त्रये।**
**पादानाद्यंतैकवर्णान् खड्गबंधो भवेदयम्॥**

अत्र द्वितीये खड्गबंधे गोमूत्रिकाबंधोऽपि द्रष्टव्यः।

**अथ गोमूत्रिकाबंधमुदाहरति—**

**विजयींद्रवर्य धुतगर्व धीनिधे**
**सतताद‍ृतास्तव गुणा लसत्तमाः।**
**निजसांद्रधैर्यजितपर्वतानिशं**
**समताश्रिता नवमृणालसत्क्रमाः॥**

धुतगर्व मुक्ताहंकार धीनिधे ज्ञाननिधे निजेन सान्द्रेण धैर्येण जितपर्वत विजयीन्द्रवर्य नवमृणालवत् नूतनतामरसबिसस्येव सन् प्रशस्तो मार्दवमाधुर्यादिप्रकारो येषां ते समताश्रिताः समतां सर्वभूतेषु सर्वतंत्रेषु वा साम्यमवैषम्यं श्रिताः अत एव सतताद‍ृताः साधुभिः संततमर्चिताः, 'आद‍ृतौ सादरार्चितौ' इत्यमरः। तव गुणाः पाण्डित्यादयः लसत्तमाः अनिशमतिशयेन लसन्तीत्यर्थः। उपमया संसृज्यते अस्योद्धारः—

**एकांतरितसारूप्यं वर्णानामर्धयोर्यदा।**
**गोमूत्रिकामिमां प्राहुरन्वर्थां चित्रवेदिनः॥**

लेखनप्रकारस्तु—

**तिर्यग्रेखात्रयं कृत्वा वीथीयुग्मे लिखेत् क्रमात्।**
**अर्धद्वयं भवेत् तत्र गोमूत्रप्रतियातना॥**

**अथ कुलालचक्रबन्धमुदाहरति—**

**नयेन सेवामनसा धवेन न वेधसा जय्यमवैहि तेन।**
**न ते हि वैरं मुनिना जवेन न वेजना किं सरसेन येन॥**

पदानि— नयेन, सेवामनसा, धवेन, न, वेधसा, जय्यम्, अव, एहि, तेन, न, ते हि वैरं, मुनिना, जवेन, न, वेजना, किं, सरसेन, येन ॥

हे धवेन धवानां नराणां इन प्रभो श्रेष्ठ 'पतिशाखिनराधवाः' इत्यमरः। नरश्रेष्ठ हे विद्वन् ब्राह्मणेति सम्बुद्धिः, इमं विजयीन्द्रं नयेन विनयाद्याचरणेन सेवामनसा परिचारबुद्ध्या वा जय्यं जेतुं शक्यम् अवैहि अवगच्छ अन्यथा तेन वेधसा प्रसिद्धेन ब्रह्मणापि न जय्यम् अवैहि तस्मात् "जवेन वादेषु वेगवता(भा) जवो वेगिनि वेगे च" इति वैजयन्ती। मुनिना विजयीन्द्रमुनिना सह ते तव वैरं न, वैरं निषिद्धं विरोधो मास्तु इत्यर्थः। सरसेन सहृदयेन यद्वा रसो वीर्यं वाचि वीर्यवता येन विजयीन्द्रेण वैरं वेजना भयसाधनं न किम्? भयप्रयोजकमेवेत्यर्थः। ओविजी - भयचलनयोः (१२८९)-(१४६०) इति धातोः हेतुमण्ण्यन्तात् 'ण्यासश्रन्थो युच् ३-३-२०७' इति करणे युच्प्रत्ययः। तस्मात् सेवामेव कुरु वैरं मा कुरुष्वेति भावः। हेत्वलंकारेणायं संसृज्यते। अत्र अवैत्युपसर्गपूर्वत्वेन योजने दुर्लभा वृद्धिः। 'ओमाङोश्च' ६-२-९५ इति पररूपेण बाधादित्याहुः। महाकविप्रयोगदर्शनात् वृद्धिरस्ति इति अभिप्रायः। यथा 'अवैहि मां किंकरमष्टमूर्तेः' इत्यादौ।

यथा वा,

सा भाति यौगीन्द्रसुगीरयासा सायारगीराहतिसप्रशंसा।
साशंप्रसक्ता भुवने सरासा सारासनेहामपि यौति भासा॥

अयासा प्रयत्नरहिता क्लेशरहितेत्यर्थः। आसायम् अवसानपर्यन्तं आरस्य अरिसमूहस्य गीराहत्या वचनव्याघातेन सप्रशंसा सारासा सलीला सारा श्रेष्ठा यौगीन्द्रसुगीः सूक्तिः समेहां सर्वमनोरथं यौति मिश्रयति। अस्योद्धारः—

चक्रवन्मण्डलं कृत्वा रेखाभ्यां तदनन्तरम्।
द्वे वीथ्यौ तिर्यगूर्ध्वाभ्यां रेखाभ्यामन्तरा लिखेत्॥

लेखनप्रकारस्तु—

आद्यन्तवर्णं पादानां नाभौ कृत्वैकमेव च।
प्रवेशनिर्गमौ दिक्षु कृत्वा शेषं ततस्ततः॥
लिखेद् बाह्यान्तरालेषु चक्रं कौलालकं मतम्।

पद्मबन्धोऽप्ययं कर्तुं शक्यो लक्ष्म तु पूर्ववत् ।।
वापीबन्धोऽप्ययं कर्तुं शक्यो लक्ष्म तु वक्ष्यते ।
चतुष्कोणे तिर्यगूर्ध्वरेखायुग्मचतुष्टयम् ।
तिरश्चीरूर्ध्वमूर्ध्वास्तु तदधो योजयेन्मिथः ।
मध्यादानुष्टुभं लेख्यं चतुस्तीर्थे गतागतम् ।
वापीबन्धोऽयमाख्यातः कौलालाष्टदलाब्जवत् ।।

छुरिकाबन्धमुदाहरति—

योगभागयि गण्यासावाशावासा जयौजसा ।
सारसाशयते भासा साभाते यशसा रसा ।।

पदानि— योगभाक्, अयि, गण्या, असौ, आशावासाः, जयौजसा, सारसाशयते, भासा, साभाते, यशसा, रसा ।

सारसं पद्ममिवाशयो यस्य तत्सम्बुद्धिः सारसाशय कमलकोमलहृदय इत्यर्थः । आभातिः प्रतिभा तया सहित साभाते, अयि योगभाक् हे विजयीन्द्रयोगिन् ते तव जयौजसा दिग्विजयप्रतापेन असौ रसा भूमिः आशाः दिश एव वासो वसनं यस्याः सा दिगम्बरा तत्तद्दिगलंकारभूतसर्वविद्वज्जनभंगेन तत्कीर्तिनिरासात् भूमिर्दिगम्बरेव भवति । ततस्ते भासा भासमानेन । 'भ्राजभास (धुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप् ३-२-१७७) इत्यादिना कर्तरि क्विप् । तादृशेन यशसा गण्या माननीया भवति । पुनस्तव यशसा दुकूलालंकृतेव भवतीति भावः । पूर्वरूपालंकारेणायं संसृज्यते ।

यथा वा,

भोगी योगीन्द्रगीर्भारं धीत्वा धीरं तलान्तरम् ।
रंहसार तनुस्तोत्रत्रस्तो नु तरसा हरम् ।।

भोगी शेषः धीरं गम्भीरं योगीन्द्रस्य गीर्भारं वाग्गुम्भं धीत्वा पीत्वा तलान्तरं पातालमध्यं रंहसा वेगेन आर नु जगाम किम् ? तनुस्तोत्रात् अल्पस्तुतेः त्रस्तः सन् हरं वा आर । संदेहेनायं संसृज्यते । अस्योद्धारः—

एककोष्ठं पुरश्शंकुत्रिकोष्ठं फलकं तिरः ।
एककोष्ठं ततो मुष्टिं पंचकोष्ठं फलं तिरः ॥
सप्तकोष्ठं ततो धारां विलिखेच्छुरिका भवेत् ।

वर्णविन्यासप्रकारस्तु—

शंकावेकं पार्श्वयोर्द्वौ त्रीन् वर्णान् फलकान्तरे ।
शंकौ फलान्तरे सेव्ये फलमध्येथ दक्षिणे ॥
फलमध्ये त्सरौ चोर्ध्वफलमध्य इति क्रमात् ।
द्वितीयतुर्यकोष्ठानामैक्यादाद्यफलान्तरे ।
समानरूपानावृत्य मुष्टावेकं लिखेत्ततः ॥
समाप्य प्रथमं पादं द्वितीयफलकान्तरे ।
तद्वामकोष्ठे पादस्य द्वितीयस्याद्यमक्षरम् ॥
द्वितीयवर्णं तत्पार्श्वेऽप्याद्यमेव तृतीयकम् ।
चतुर्थं पूर्वपादान्त्यं पंचमं तस्य दक्षिणे ॥
तस्यापि दक्षिणे षष्ठं पञ्चमीकृत्य सप्तमम् ।
अष्टमं पूर्वपादान्त्यं कृत्वाद्यार्थं समापयेत् ।
चित्रज्ञैश्छुरिकाबन्धश्छुरिकाकृतिरुच्यते ॥

अथ गुच्छबन्धः—

श्रीविद्याविभुविज्ञानिमुनिना निखिला कलाः ।
विलासमसमप्रेम जगत्यागत्य गर्जति ॥

निखिला कला समस्ता कला विद्याविभुः विद्यापतिरिति प्रसिद्धः स चासौ विज्ञानिमुनिः विजयीन्द्रयतिः तेन असमम् अतुलं प्रेम स्नेहो यथा तथा, विलासं विजृम्भणम् आगत्य प्राप्य जगति गर्जति । अनुरूपवरप्राप्त्या स्त्रियः कत्थन्त इति भावः । अतिशयोक्त्या अयं संसृज्यते ।

यथा वा,

राम कामसम श्रीमद्धाम नाम श्रिये श्रये ।
नयेन मतिमत्प्रेमदिशत्याशशिशर्म ते ॥

हे कामसम राम श्रीमद्धाम समग्रप्रभावं ते तव नाम नयेन नीत्या श्रिये सम्पदे श्रये कीर्तयामीत्यर्थः। तदेव आशशि आचन्द्रं नित्यमित्यर्थः शर्म आनन्दो यस्मात्तत् तादृशं मतिमत् ज्ञानयुक्तं प्रेम भक्तिं नित्यानन्दहेतुं भक्तिं दिशतीत्यर्थः। अस्याः एकान्तरमणिहारबन्धवदुद्धारः।

अथ मुरजबन्धमुदाहरति—

विभाति जयि(य) योगिंस्ते विभातिशययोगिनी।
प्राभातिकश्रियो धर्मसभातिजयियोधभाक्॥

हे जययोगिन्! प्राभातिकी प्रभाते भवा या श्रीः शोभा, सकलप्राणिबोधकत्वानन्दकरत्वतमोविरहादिगुणविशिष्टा तस्यास्ततोऽपि विभातिशयस्य प्रकाशोत्कर्षस्य योगिनी योगवती अतिजयिनोऽत्यर्थजयशीलान् योधान् वादशूरान् भजतीति तथोक्ता ते तव धर्मसभा विभाति। यथा वा,

अव राम धराकन्याधव राजदिराक मा।
माकरादित्यराजश्रीनाकरामधराजने॥

धराकन्याधव! सीताकान्त। राजन्ती इरा भूमिः यस्मिन् तत्सम्बुद्धिः। 'शेषाद्विभाषा' इति कप्रत्ययः। आपोन्यतरस्यामिति पक्षे ह्रस्वत्वाभावः। मा लक्ष्मीः तस्याः आकर निधे! आदित्यराजानां देवश्रेष्ठानां श्रियि सम्पदि नाकरामधराजने स्वर्गमनोज्ञभूरुह तेषां कल्पतरुवदभीष्टप्रद! इत्यर्थः। मा मां त्वादौ? द्वितीयादेशः (द्वितीयायां मादेशः)। अव रक्षेति। अस्योद्धारः—

तिर्यग्रेखा लिखेत्पञ्च नवोर्ध्वास्तत्र पंक्तयः।
अष्टकोष्ठाश्चतस्रः स्युः तत्र श्लोकं लिखेत्क्रमात्॥
आद्यांघ्री आद्ययोः पंक्त्योर्वाच्यौ गोमूत्रिकाक्रमात्।
किंचैकं द्वितयं द्वैतं द्वयमेकमिति क्रमात्।
द्वितीयं द्वयमेकं च द्वयमेकं द्वयं पुनः।
स्वपंक्तिप्रक्रमादेवं विन्यासे द्वितयं भवेत्॥
एवं द्वितीयतुर्यांघ्रिस्वपंक्तेस्तदुपक्रमात्।
वर्धिकाबन्धवच्चैषां पादानां वाचनक्रमः।

तत्राद्यद्वित्रितुर्यासु तुर्यत्रिद्व्यादिपंक्तिषु ।
आद्यद्वित्रिचतुःपञ्चषट्सप्ताष्टमसद्मसु ।
दृश्यते प्रथमः पादः चतुर्थश्चैवमेव हि ।
द्वितीयपंक्तेरारभ्य तृतीयाद्यक्षरावधि ।
चतुःकोष्ठद्वये पादो द्वितीयो दृश्यते पुनः ।
द्वितीयवीथ्यन्तवर्णादातृतीयान्त्यान्त्यवर्णतः ।
चतुःकोष्ठद्वये पादः तृतीयोऽपि च दृश्यते ।
द्वितीयाद्यादिमद्वित्र्योः द्वित्रिपंक्तिचतुर्थयोः ।
तुर्यद्वित्र्योस्तृतीयाद्ये दृश्यः पादो द्वितीयकः ।
तृतीयांघ्रि द्वितीयान्ते आद्यसप्तमषष्ठयोः ।
द्वित्रिपंचमयोस्तुर्यषष्ठसप्तमयोः क्रमात् ।
तृतीयान्ते च लक्ष्योऽसौ बन्धे मुरजसंज्ञके ॥

अथ सर्वतोभद्रबंधमुदाहरति—

व्रतीनते तेन तीव्रतीरभा न न भारती ।
न भावनानावभा न तेन नाघ घना न ते ॥

व्रतीनते तेन तीव्रतीरभा न न भारती
न भावनानावभा नतेन ना अघ घनानते ।

हे व्रतीनते तेन व्रतिनां मुनिश्रेष्ठत्वम् इताः प्राप्ताः एतेषाम् इन प्रभो ! नाघ पापरहित निषेधार्थनसमासात्रलोपाभावः ते तव भारती वाक् तीव्रतीरभा अविलम्बितं पर्यवसितार्थभानं यया सा । न न भवति भवत्येव । नञ्द्वयमतिशयेन प्रकृतार्थं सूचयति । इहाभिप्रायः पर्यवसानसीमापदार्थः तीरशब्देनोच्यते । भावनानावभा भावेन स्वभावेन नाना बहुविधं भावस्फुरणं अर्थबोधनशक्तिः यस्याः सा, न भवतीति न तेन यस्मादेवं तेन कारणेन घना प्रौढा नेति न प्रौढैवेत्यर्थः ।

अयं नवरंगबन्धोपि केवलो यथा—

श्रीराम सा सामरा श्रीराजिसार रसाजिरा ।
मसारभा भारसामसारभा ससभारसा ॥

पदानि— श्रीराम सा सामरा श्रीराजिसार रसाजिरा मसारभाभारसामसारभ आस सभारसा ॥

व्या— मसारभाभारस्य इन्द्रनील(मणि)कान्तिपुञ्जस्य साम्रा सान्त्ववादेन सारा श्रेष्ठा भा यस्य तत्सम्बुद्धिः। हे श्रीराम ते तव सभारसा सभाभूमिः 'आस दिदीपे अस गतिदीप्त्यादानेषु' (८८६) इति धातोः लिट्। कीदृशी सामरा सभाजनार्थमागतैरिन्द्रादिभिस्सहिता, श्रियां कनकरत्नादिसम्पदाम् त्विषां वा। राजिः पंक्तिः तया सारा उत्तमा रसाः शृंगारादयः येषु तानि अजिराणि अंगणानि यस्याः सा तादृशी। यथा वा,

श्रीरामसासामरा श्रीराजितामपताजिरा।
मतावभाभावतामसामभा ससभामसा ॥

पदानि— श्रीराम, सा, सामरा, श्रीरामजिताम, मताजिरा, मतौ, अभाभावतामसामभा, आस, सभामसा।

व्या— श्रीराजितानां सम्पद्विलसितानां नृपादीनामिति शेषः। अमेन गत्या मतानि पूजितानि अजिराणि यस्याः सा मतौ बुद्धौ भा भावस्फुरणाभावः तामसं तमस्समूहः पापसमूहः तमोगुणो वा। आमभा अपरिणतप्रतिभा एव ताः न विद्यन्ते यस्याः सा मस्यति परिछिनत्तीति मसा धर्माधर्मयोः परिच्छेदिका मसी परिणामे १२२१— 'पचाद्यच्'। शेषं पूर्ववत्। तादृशी सभा सभागतजना आस।

अयं नवरंगबन्धोपि - अस्योद्धारः—

रेखास्तिर्यङ् नवोर्ध्वं च यदि वीथ्योष्टकोष्ठकाः।
श्लोकपादान् क्रमादाद्ये न्यस्य वीथीचतुष्टये ॥
आरभ्याष्टमपंक्तेस्तान् पुनर्न्यस्येच्चतुष्टये।
तत्राद्यपादो बाह्यासु चतसृष्वपि वीथिषु।
द्वितीयश्च द्वितीयासु तृतीयासु तृतीयकः।
चतुर्थीषु चतुर्थः स्यात् सर्वतोभद्रबन्धने।

नवरंगबन्धोद्धारस्तु—

तिर्यगूर्ध्वं चतूरेखं लिखित्वा नवकोष्ठकम्।
आग्नेययाम्यमध्यैद्रैष्वाद्यः पादो गतोगतान्।
याम्यनैर्ऋतपश्चात्यमध्यमेषु द्वितीयकः।
मध्यपाश्चात्यवायव्यकौबेरेषु तृतीयकः।
ऐन्द्रमध्यमकौबेररौद्रेषु स्याच्चतुर्थकः॥
गतप्रत्यागतावृत्त्या नवरंगोऽयमुच्यते।

धनुर्बन्धो यथा—

नाथेनास्मि सनाथोऽहं हंसवंशविभासिना।
नाशिताशरनाथेनानाथेनारशताशिना॥

व्या— हंसवंशे सूर्यान्वये विभासिना नाशितः आशरनाथः राक्षसेश्वरो येन तेन नाथो न विद्यते यस्य तेन अनाथेन आरशतम् अरिसमूहशतम् अश्नाति हिनस्तीति आरशताशी तेन नाथेन अहं सनाथो नाथवानस्मि॥ उद्धारः प्रसिद्धः। लेखनप्रकारस्तु—

प्रथमान्त्यं द्वितीयाद्यमेकीकुर्वीत ल[१]स्तके।
आद्यादिमद्वितीयान्त्यवर्णाभ्याम[२]टनिद्वये।
तृतीयं विलिखेत् मौर्व्यां स्यात्तुल्यं प्रातिलोम्यतः।

शरबन्धो यथा—

पातु सेतुकृतोऽतीतो मतोऽशनिशतं शरः।
जवाद्योवाजवाद्योता वातोवाताशिकाशिता॥

व्या— मतः श्लाघितः अशनिशतम् अतीतः अतिक्रान्तः सेतुकृतो रामस्य शरः पातु। वाजात् पक्षात् वान् प्रकाशमानः द्योतः स्फुरणं यस्य तादृशः आवातो मंडलवातो यस्य तादृशो यः शरः वाताशिकानां सर्पाणाम् अशिता भक्षको गरुडः अभूत्। अस्योद्धरः—

साष्टपर्वगवत्पुंखं काण्डमर्धेन्दुवत्फलम्।

लेखनप्रकारः—

१. लस्तकस्तुधनुर्मध्यम्-अमरः २. कोटिरस्याटनी-अमरः

आद्यं द्वितीयं पुंखाद्यो: द्वितीयं पूर्वपर्वणि ।
तुर्यं कृत्वा त्रितुर्यस्थौ त्रिस्त्रिरावर्त्य पक्षगैः ।
पञ्चमेर्धं समाप्यार्धं षष्ठे सप्तमकेऽष्टमे ।
पुनः सप्तमके षष्ठे ततस्सप्तमकेऽष्टमे ।
आवृत्त्यैवं तृतीयांघ्रि फलमध्ये समापयेत् ।
तुर्यस्याद्यं सव्यकोष्ठे तदूर्ध्वे च द्वितीयकम् ।
आद्यं तृतीयीकृत्याथ चतुर्थं फलकान्तरे ।
पञ्चमं दक्षिणस्याद्ये तदूर्ध्वे षष्ठमप्यथ ।
पञ्चमं सप्तमीकृत्य चतुर्थे चाष्टमीकृते ।
तुर्यः पादो भवेदेवं शरबन्धः सतां मतः ॥

शूल्बन्धो यथा—

सामिनाविनामिसारसार्कसारसादय ।
यादसां प्रमाथ राक्षसागनाशकीलना ॥
नादजादरादयादरादवेदवेदना ।
नाल्कीशनागसाक्षराथमां प्रसादया ॥

सामि यथाकथंचित् नुवतीति सामिनाविनः । 'सामि त्वर्धे जुगुप्सने' इत्यमरः । तानपि नमन्तीति तन्नामिनो जनाः त एव सारसानि तेषामर्क सूर्य । आरं अरिसंघः तस्य सादो नाशः तेन सहितः तस्य सम्बुद्धिः आरसाद शत्रुबृन्दघातिन् । अवेदनानालौ वेदनाबन्धरहितौ कीशनागौ सुग्रीवगजेन्द्रौ येन तस्य सम्बुद्धिः हे राम इत्यर्थः । या दया करुणा यादसां जलचरजन्तूनां प्रमाथे सागरबन्धन इत्यर्थः । राक्षसाः अगाः पर्वता इव तेषां नाशे कीलनं बन्धनं नियमो यस्याः सा तादृशी नादजः आदरो यस्याः स्वामिन् पाहि इत्यादि शब्दमात्रजनितादरा अक्षरा अचंचला प्रसादं यातीति प्रसादया 'आतोऽनुपसर्गे कः' (३-२-३) कात् दया मां दरात् भयात् अवेत् इति प्रार्थने लिङ् ।

अस्योद्धारः—

मुकुलाकारकं शंकुं रेखाभ्यां काण्डमायतम् ।
लिखेद्दलत्रयं चोर्ध्वं ततः शूलाकृतिर्भवेत् ।
शंकौ सप्तग्रहा यष्टावेकादश दले त्रयः ।

लेखनप्रकारस्तु—

दक्षिणे तु दले पूर्वं ततः सव्येऽथ मध्यमे ।
आमध्याग्रा काण्डशंक्वोर्लिखेद्वर्णगतिर्यथा ।

हलबन्धो यथा—

रामावाततवामारामारणाररणारमा ।
वारमाशरदायादे देयादारशमावरा ॥

व्या— हे राम आततवामारस्य प्रतिकूलारिसंघस्य आमारणे हिंसने अरं क्षिप्रं आरमः युद्धोपरमः यस्याः क्षणात् अरिसमूहं निहत्य उपरन्तुं शक्तेत्यर्थः । आरशमः अरिसंघोपरतिः तत्प्रदो रवो यस्याः तादृशी तव रमा विजयश्रीः आशरदायादे राक्षसपुत्रे इन्द्रजिति वारं निरोधं देयात् । अव रक्ष इति रामं प्रति मुनीनां प्रार्थना । अस्योद्धारः—

चतुःकोष्ठं त्सरुं वक्रं तावत्कोष्ठं ततः पविम् ।
मिश्राष्टकोष्ठामीषां च हलाकृत्येवमालिखेत् ॥

विन्यासः—

अग्रादारभ्य चतुरो वर्णानावर्तयेत् त्सरौ ।
ततो द्वितीयाच्चतुरः कोष्ठादावर्तयेत्पवौ ॥

तत्पृष्ठकोष्ठादीषायां चाष्टौ वर्णान् गतागतैः ।
हलबन्धोऽयमाख्यातः चित्रज्ञैः हलरूपतः ॥

मुकुलबन्धो यथा—

सेवं राममरावंसे सेहभीममभीहसे ।
सेव्या नाम मना व्यासे सेज्यया मम याज्यसे ॥

व्या— इह वायोरवतारत्रयं वर्ण्यते । अरौ शत्रौ विषये रामं राघवं अंसे स्कन्धे सेवं सेवित्वा इह 'द्वितीयायां च' ३-४-५३, इति सेवतेर्णमुल् प्रत्ययः । 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (२-२-२१) इति पक्षे द्वितीयान्तोपपदस्य समासाभावः । सेहं ईहयसकलं साकल्येऽव्ययीभावः । पादचलनादिसर्वचेष्टासु

भीमं भयंकरं यथा तथा चेष्टसे व्यासे सेव्यं श्लाघ्यम्, आनामे आनतौ मनो यस्य तादृशः। सेह स इह इति विभागः 'सोऽचिलोपे चेत्पाद पूरणम्' ६-२-२३४, इति सोर्लोपे 'आद् गुणः' ६-२-८६१। इह तृतीयावतारे मम इज्यया यागेन याज्यसे पूजां प्राप्यसे। अस्योद्धारः—

पद्मकोशं विलिख्यैकं रेखायात्श्चतुर्दलम्।
द्वौ द्वौ चतुर्दल्यामेकमाद्यन्तयोरिह॥

पादानामादिमानाद्ये वर्णानन्त्येन्तिमान् लिखेत्।
गतप्रत्यागतैःश्लोको वाच्यो मुकुलमत्स्ययोः।
रेखाभिः पञ्चभिः तिर्यङ् मत्स्यः स्यान्मुखपुच्छयुक्॥

सख्यश्चायं कर्तव्यश्चतुर्दलपद्मं च—

षट्कोणबन्धो यथा—

तन्वीत मतं मे तस्यातनुतन्त्रा तन्वीतनितव्या तत्वाततितश्रीः।

व्या— तत्वानामाततितः पंक्तिभिः तनितव्या विस्तीर्य प्रतिपादयितव्या अतनुतन्त्रा अनल्पजगत्कुटुम्बव्यापारा तस्य हरेः तन्वी भार्या श्रीः मे मतं इष्टं तन्वीत कुर्यात्। अस्योद्धारः—

षट्कोणं विलिखेत् बाह्ये मण्डलं चैकरेखया।

विन्यासस्तु —

नाभावेकं षटसु कोणेष्वन्तरालेषु षट्सु षट्।

अयमेव द्वादशदलपद्मबन्धः॥

आन्दोलिकाबन्धो यथा —

साऽजराततरामश्रीरामश्रीररसा मता।
तामसारतिदास्यान्मे दास्यान्मेषितराजसा॥

सा प्रसिद्धा अजरा नित्या आमश्रियं रोगसम्पदं ईरयति क्षिपतीति आमश्रीः, रसो वीर्यं यस्याः तादृशी मता पूजिता तता रामस्य श्रीः दयादिगुणसम्पत्तिः मे दास्यात्

दासभावाद्धेतोः तामसस्य अरतिमुपरतिं ददातीति तादृशी स्यात्। किंच मेषितं निमीलितं राजसं रजोगुणः यया सा तादृशी च स्यादिति प्रार्थने लिङ्।

अस्योद्धारः —

**वक्रमध्यं लिखेद्दण्डं मध्ये कोष्ठत्रयं लिखेत्।**
**पार्श्वयोस्तु चतुःकोष्ठमाधारे च त्रिकोष्ठकम्॥**
**भारयष्ट्योरेकमेकं भवेदान्दोलिकाकृतिः।**

वर्णविन्यासस्तु —

**दण्डस्य वामपार्श्वस्थकोष्ठेषु चतुरोऽत्र तु।**
**वर्णान्पञ्चमतुर्यैकान् त्रीन् द्विरावर्त्य मध्यमे॥**

**द्वितीयांघ्रिस्तुर्यमेव पञ्चमीकृत्य दक्षिणे।**
**चतुःकोष्ठे विलिख्यैवं दण्डेऽर्धं प्राक्समापयेत्॥**

**द्वितीयांघ्रेः पञ्चमाद्यैः तृतीयादिचतुष्टयम्।**
**दण्डस्य दक्षिणे वाच्यं यष्टौ पञ्चममालिखेत्।**
**आधारे त्रीन् द्विरावर्त्य षष्ठसप्तमकाष्टमान्॥**

**तुर्यस्यादित्रयीकृत्य वामयष्टौ चतुर्थकम्।**
**पञ्चमादिचतुष्कं तत् वामकोष्ठेषु योजयेत्।**
**एवमान्दोलिकाबन्धः चित्रवेदिभिरीरितः॥**

**छत्रबन्धो यथा —**

**शीताक्ष्णा तावता नीता सीतापाताद्धुताहिता।**
**नीतिपालनदक्षा सा साक्षादनलपातिनी॥**

व्या— तावता सूक्ष्मेणापि शीताक्ष्णा अनुकूलदृष्ट्या नीता युक्ता धुताहिता अहितनिरासिनी सीता पातात् पातु मामिति शेषः। पुनः कीदृशी नीतिपालनदक्षा पतिव्रताधर्मरक्षणचतुरा साक्षात् प्रत्यक्षतः अनलपातिनी सम्यगग्निं प्रविष्टा तत्साधुकारित्वे णिनिप्रत्ययः। स्वयं सर्वलोकपाविन्यपि पतिव्रताचाररक्षणाय अग्निस्पर्शशुद्धिं कृतवतीत्यर्थः। अस्योद्धारः —

शृंगमूर्ध्वमधोरेखा नवदण्डोऽथ सप्तभूः ।

विन्यासस्तु —

शृंगस्थेनैकवर्णेन शलाकानष्टकोष्ठकान् ।
एकान्तरसमेनाद्यमावर्त्याद्यं समापयेत् ॥
शलाकामध्यकोष्ठस्थं गृहीत्वा यष्टिकोष्ठगैः ।
तृतीयतुर्यौ गमनागमनाभ्यां समापयेत् ।
छत्रकत्वादयं छत्रबन्धो विद्वद्भिरीरितः ।

अयमेव सूरपानबन्धो यथा —

कोणाग्रं वर्तुलाग्रं च सूरपानमपि द्विधा ॥

विन्यासस्तु पूर्ववत् ।

**चामरबन्धो यथा —**

रमां सदा मुदा हृदा भजे भवे भवे भरा
दरा दवे दवेगजेगतादरा दवेदसौ ।
रसौघवेशराजिताजिताशराघदारतां
गता सदामरानतानवामवासवा गवा ॥

व्या— अवेदवेगजे अबोधितातिशयजनिते भवे भवे सर्वस्मिन् जन्मनि सदा मुदा नित्यहर्षेण हृदा रमां भरादरात् अतिशयितादरात् भजे रसौघस्य दयादिगुणवृन्दस्य वेशेन राजिता शोभिता जिता राघवस्य जितराक्षसपीडनस्य रामस्य दारतां गता भार्यात्वं गता सीतेत्यर्थः । सदा अमरैरानता नमस्कृता अवामः अमनोज्ञः अनवामः गवा स्वर्गेण स्तुतिरूपवाचा वा अतिमनोज्ञः सश्रीको वासवो यया साऽसौ रमा गता मया श्रिता सती दरात् भयात् अवेत् । अस्योद्धारः —

त्रिकोष्ठौ काण्डपिण्डौ च कोष्ठमेकं ततः परम् ।
वाल्कानायतान् पञ्च तन्मध्ये पञ्च घट्टकान् ।
चतुष्कोष्ठानेककोष्ठं लिखेदग्रेऽत्र चामरे ।

विन्यासस्तु —

खड्गत्सरुवदावृत्तिः पिण्डके तस्य मध्यगम्।
आद्यघट्टगतैर्वर्णैः आवृत्त्याथ द्वितीयगैः॥

पूर्वगानेवमग्रेऽपि तृतीयस्थैर्द्वितीयगान्।
तुरीयस्थैस्तृतीयस्थान् पंचमस्थैस्तुरीयगान्।
तैरेवावर्त्य विलिखेत् एवं वालाग्रकोष्ठके॥

ख्यातश्चामरबन्धोऽयं रीतिभेदश्च दृश्यते।

यथा वा,

रमां सदा मुदा हृदा दयां ददातु मे तुदा
गसांरसांगभावभागभोग्यभाग्यभोनना।
नभोमलाललामभासभामकामिभूमिका
सितासिका हरौ सुहृत् सुरौहकामभोगदा॥

व्याः— आगसां पापानां तुदा तोदनकर्त्री तुदेः इगुपधलक्षणः कप्रत्ययः, पापहारिणीत्यर्थः। रसस्य शृंगारस्य अंगभूतान् भावान् क्षौमांगरागमाल्याभरणादीन् अक्षिभ्रूभंगकम्पनादिचेष्टाविशेषांश्च भजतीति रसांगभावभाक्, भोग्यम् अनुभाव्यं वस्तु भाग्यं शुभकर्म भा कान्तिः तेषाम् ऊननं परिहाणं न विद्यते यस्याः सकाशात् सा अभोग्यभाग्यभोनना भजतां सौभाग्यवस्तुप्रदेत्यर्थः॥ नभ इव अमला नभोमला ललामानां तिलकभूषणानां भासेन कान्त्या भामा भासमाना भातेः औणादिको मन्प्रत्ययः। कामिनीभूमिका वेशो यस्याः सा हरौ नारायणे सितासिका बद्धस्थितिः सुहृत्सु भक्तेषु रौहम् औत्पत्तिकं कामभोगम् इष्टसुखं ददातीति रौहकामभोगदा रमा सदा मुदा नित्यहर्षेण हृदा दयां मे ददातु। अस्य पिण्डस्योद्धारस्तु पूर्ववल्लेखने भवेत्।

पिण्डमध्ययुतं वालनालं पञ्चगृहं लिखेत्।
कोष्ठपर्वभ्य आरभ्य षड्वालानूर्ध्वमायतान्।
नालादुपरि च द्वौ चेल्लिखेच्चामरवद्भवेत्।

विन्यासस्तु—

त्रिषु त्रीन् विलिखेन्मुष्टौ पिण्डे खड्गफले तथा।
यथा द्वितीये छुरिकाफले तद्वद् द्विपार्श्वके ॥

सनारकोष्ठयोर्वालवीथिका पञ्चतो: क्रम:।
नालाग्रवालवीथ्यां तु विन्यस्य चतुरोऽन्तिमम्।
त्यक्त्वा शिष्टैस्त्रिभिर्नालकोष्ठगै: पिण्डकान्तरे।
प्रत्यागत्या समाप्यैवं श्लोकेऽस्मिन्नपि चामरे ॥

अर्धभ्रमणकं यथा —

रमाविभो देव पाहि मामनागोवदातुरम्।
विनात्वदा पातु कोऽज भोगोदारं हि रंजयेत् ॥

व्या:— हे देव रमाविभो ! आतुरं मां अनागोवत् अपापेन तुल्यं अपापं यथा रक्षसि तथा मां पापिनमपि पाहीत्यर्थः। हे अज त्वद् विना त्वामन्तरेण कः आपातु न कोऽपीत्यर्थः। भोगोदारं सम्पत्प्रवृद्धं सर्वो हि रंजयेत् तत्राश्चर्यमिति भावः। अस्योद्धारः—

तिर्यक्पंचनवोर्ध्वाश्च लिखेद्रेखा स्स्युरत्र तु।
चतस्रोऽष्टग्रहावीथ्य: तत्र श्लोकं क्रमाल्लिखेत् ॥

तत्र—

वीथीनामादित: तिर्यक्कोष्ठकेषु चतुर्ष्वपि।
पादानामर्धमर्धं स्यात् पंचमादिषु तु क्रमात् ॥

परिशिष्टार्धमूर्ध्वेषु किञ्च प्रथमवीथिगे।
तिर्यक्कोष्ठचतुष्के च पञ्चमोर्ध्वचतुष्कके ॥

दृश्यते प्रथम: पाद: द्वितीयस्यां द्वितीयक:।
षट्सु कोष्ठेषु षष्ठोर्ध्ववीथ्यां त्रिषु च दृश्यते ॥

तृतीयाया: (स्या:) सप्तसु च तुर्यवीथ्याश्च सप्तमे।
तृतीय: किञ्च सर्वेषु चतुष्केषूर्ध्वमष्टसु ॥

आद्यपञ्चमयोराद्यो द्वितीये षष्ठके परः ।
तृतीये सप्तमे चान्यः चतुर्थाष्टमयोः परः ॥

पादा अर्धभ्रमणके दृश्या एवं विचक्षणैः ।

रथबन्धो यथा—

त्रयाक्षरसुभासुर क्षरदसादरक्षस्तमः
समस्तरविरस्तसद्व्यसन सत् त्रिवेदीनुत ।
ततामितदयामृतप्रशिशिरेक्षणैरेधिनो
हवेन घनवेहनोऽविभविनो हरे नो धिनु ॥

व्याः— त्रयोऽवयवा अक्षराणि अस्य त्रयाक्षरमकारोकारमकारात्मकः प्रणवः तत्र सुभासुर शोभमान अस्तसद्व्यसन निरस्तसाधुजनदुःख ! सत्या निर्दोषया त्रिवेद्या वेदत्रयेण नुत हे हरे क्षरन्ति सञ्चरन्ति असादानि नाशरहितानि रक्षांसि एव तमांसि तेषां समस्तरविः अखण्डसूर्यः स त्वं ततं विस्तृतम् अमितम् अनन्तं दयैव अमृतं ते शशिरैः ईक्षणैः नः हवे यज्ञे 'आज्ञाह्वानाध्वरा हवाः' इत्यमरः । अनघं मंगलकरं नवं ईहनं उद्यमः यस्य तादृशः एधि भव अविभविनः विभवरहितानपि नः अस्मान् धिनु प्रीणय ।

अस्योद्धारः—

छत्रशृंगाग्रकाण्ड्येका कोष्ठान्यूर्ध्वादयो लिखेत् ।
त्रिपंचसप्तकोष्ठांस्त्रीन् घट्टानूर्ध्वक्रमात्ततः ॥

एककोष्ठावधस्तंभावाधारं च त्रिकोष्ठकम् ।
चक्रद्वयं चैकरेखं तिर्यगूर्ध्वद्विरेखकम् ।
एककोष्ठानुकर्षं च तन्मध्येऽथ त्रिरेखकम् ।
आदावन्त्ये द्विरेखं च त्रिकोष्ठं कूबरं ततः ।
युगं सप्त गृहं चैव स्याद्रथप्रतियातना ।

लेखन प्रकारस्तु—

छत्रे शृंगे चैकमेकं अग्रस्थेन क्रमात् त्रिषु ।
त्रिघट्टीपार्श्वकोष्ठेषु त्रीनावर्त्यादिघट्टके ।
मध्यस्थेन द्विपार्श्वे द्वौ द्वितीयांतस्थिते न तु ।
एकं द्वितीयं मध्ये द्विस्तंभे स्थानादिमध्ययोः ।
अर्धं समाप्य तस्यांन्त्यं तृतीयादिं विभाव्य च ।
स्थानाग्रे वामचक्रस्य प्रादक्षिण्याच्चतुर्गृहे ।
मध्ये प्रविश्य पार्श्वेन निर्गत्याथानुकर्षके ।
पार्श्वाद्दक्षिणचक्रेऽपि पूर्ववत्कूबरे द्वयम् ।
एवं तृतीयं तुर्यं तु प्रावर्त्ययुगमध्यतः ।
कूबराग्रे तदाद्योश्वस्थानाद्ये च समापयेत् ।
रथबन्धोऽयमाख्यातो बद्धचित्रविचक्षणैः ।

गोपुरबन्धो यथा—

श्रीवत्सप्रोतसुश्रीरतिरविरतिरश्रीसुतप्रोत्सवश्री-
र्यारामस्वानुतश्रीविरति रतिरविश्रीतनुस्वामरार्या ।
पायादद्यानवद्याविरततरविद्यानवद्या दयापा-
पायादस्वादुघस्रादरतततरदस्त्राघदुस्वादयापा ॥

व्या— रामस्य स्वा आत्मीया (स्वात्मीया) या श्रीतनुर्मूर्तिरपायात् पायादिति संबन्धः । कीदृशी श्रीवत्सेन वक्षश्चिह्नेन प्रोता संतता सुश्रियः सुशोभायाः रतिः यस्याः सा अविरतिमविच्छेदं राति ददातीति अविरतिरा श्रीसुतस्य कामस्य प्रोत्सवश्रीः प्रकृष्टोत्सवसम्पत् यया सा उता सन्तता न अनुता श्रियो लक्ष्म्याः विरतिर्विरहो यस्याः सा अतिरविः रविमतिक्रान्ता ततोऽप्यतिप्रकाशा अनवद्या अविरता अविच्छिन्ना ततरा तादृशी विद्या ज्ञानमेव अवनदी अवगता सरित् तया अस्वादवः अनिष्टाः घस्राः दिवसाः तेष्वादरेण ततानां तरन्ति प्लवमानानि अस्त्राणि बाष्पाः यैस्तानि दुष्कालादरकृतानि परिणामे बाष्पप्रदानि अघानीत्यर्थः तेषां दुस्स्वादस्य दुःखानुभवस्य यापा यापयित्री यापयतेः पचाद्यच् प्रत्ययः । स्वामरार्या स्वेषां भक्तानाम् अमराणां च आर्या पूज्या दयां पातीति दयापा या रामस्य स्वा स्वीया श्रीतनुः सा अपायात् पायात् नः इति शेषः । अस्योद्धारः—

तिस्र ऊर्ध्वायता रेखाः पार्श्वयोः षड्ग्रहान् लिखेत् ।
तिस्रं आद्यन्तयोस्तिर्यक् पञ्चकोष्ठानथोपरि ॥

चतुश्शृंगं सिंहदले पार्श्वयोर्द्वे च विस्तृतम् ।
मूलतो मध्यतो द्वारं गोपुराकारमालिखेत् ॥

अक्षरविन्यासस्तु—

वामवीथ्यां वामदले चतुश्शृंगे च पूर्वकम् ।
दक्षिणस्य दले चात्र चतुश्शृंगे द्वितीयकम् ।
एवं समापयेद्यातायाताभ्यामर्धमादिमम् ।
मूलाग्रवीथ्यन्तरतो वामायां द्वारतोऽग्रके ।
तृतीयं दक्षिणे कोष्ठद्वये पादं समापयेत् ।
तत एव समारभ्य दक्षिणस्यां तदग्रतः ।
वामकोष्ठद्वये चान्त्यं गतागत्या समापयेत् ।
किंच द्वारोपरिस्थेऽस्मिन् एकीकृत्याक्षरत्रयम् ।
वाचयेद्गोपुरेऽत्रापि रीतिभेदश्च दृश्यते ।

तथाहि—

श्रीवत्सप्रोतसुश्रीरचितमतचिरश्रीसुतप्रोत्सवश्री
र्याराम स्वानुतश्रीविरतिरतिरविश्रीतनुस्वामरार्या ।
पायादद्यावनद्याकृतमरमतकृत्यानवद्यादयापा
माभूदस्वागतिस्सा नतिरमरति नस्सातिगस्स्वादभूमा ॥

व्या— श्रीवत्सेन प्रोतया संततया सुश्रिया सुशोभया रचिता मता श्लाघिता चिरं श्रीसुतस्य कामस्य प्रोत्सवश्रीः प्रकृष्टोत्सवसम्पत् यया सा स्मरस्यापि अतिशयौत्सुक्यदायिनी इत्यर्थः । अनुता असंतता श्रियो विभूतेः विरतिः यस्याः सा नित्यैश्वर्ययुक्तेत्यर्थः । अतिरविः पूर्ववत् । स्वेषां भक्तानाम् अमराणां च आर्या पूज्या कृत्या चरित्रेण अनवद्या रामस्य स्वा आत्मीया या श्रीतनुः रमामतिक्रान्ता अतिरमा सा चासौ अतिरमरतिः सा न विद्यते यस्मिन् कर्मणि तद्यथा तथा कृतं पर्याप्तम् । अरमत रमते स्म 'युगपर्याप्तयोः कृतमि'त्यमरः । या रमया सहैव अरमत सा नः अस्वा अनात्मीया गतिः मा भूत् । निजैव गतिरस्तु इति प्रार्थना गम्यते । किंच सातिम्

अवसानं गच्छतीति सातिगः 'सातिर्दानावसानयोः' इत्यमरः। स्वादभूमा अनुभवप्राचुर्यं यस्याः सा नः अस्माकं समाप्तानुभवा मा भूत्। नित्यं अनुभूयमानैव अस्त्विति भावः। नः अस्मान् अवनत्या पायात्। अस्योद्धारः—

रेखात्रयाभ्यामूर्ध्वाभ्यां क्रमसंकुचिताग्रकम्।
वीथीचतुष्टयं स्वाष्टकोष्ठं गोपुरवल्लिखेत्।

विन्यासः—

सव्यायां तु बहिर्वीथ्यां दले शृंगद्वये क्रमात्।
एवं दक्षिणतो यातायाताभ्यामर्धमादिकम्॥

द्वारस्य वामवीथ्यां तु त्रिशृंगे च तृतीयकम्।
एवं दक्षिणतस्तुर्यो गोपुरेऽत्रगतागतात्।

चतुर्दलपद्मे विच्छित्तिविशेषो यथा—

सा रमा चतुराध्यासा साधुहार्दलता रसा।
सारं मे नीरजोभासा साध्याद्राजन् महांजसा॥

व्या-- जगद्रक्षणे चतुराध्यासा पटुनिश्चया साधुषु हार्दं प्रेम वात्सल्यमेव लता यस्याः सा रसा भूमिः उत्पत्तिस्थानम्। नीरजाः निर्मलो भासः कान्तिः यस्याः सा राजन् महाराजमानोत्सवा सा प्रसिद्धा रमा अंजसा झटिति सारं बलं मे साध्यात् साधयेत्।

लिखेद्दलानि चत्वारि कर्णिकां परितोऽत्र तु।
विन्यस्य कर्णिकामध्ये पादानामाद्यमक्षरम्॥

त्रींस्त्रीन् वर्णान् प्रतिदलं क्रमाद्विन्यस्य पार्श्वयोः।
कर्णिकायामेव चान्त्यं योजयेदेकरूपतः।
पादेष्वाद्यन्तवर्णानामैक्यं पद्मे चतुर्दले॥

अत्र दलान्त्यगताक्षरद्वयेषु चतुर्दलनीरजन्मेति काव्यनाम निबद्धम्।
**पाशबन्धो यथा—**

त्रायेतार्तं श्रमाद्यो मादयितः सूर्यवंशजः।
देवानामहितारातिं रामदेवं तमाश्रये॥

अस्योद्धारः—

तिर्यञ्चि न्मण्डलान्यष्टौ विलिखेदेकरेखया।

विन्यासः—

त्रींस्त्रीँलिखेन्मण्डलेषु क्रमादष्टसु तत्र च।
मध्यगैरष्टभिर्वर्णैस्तुर्यपादो भवेदिह ॥

मकुटबन्धोऽप्ययं कार्यः। उद्धारस्तु—

विशालमूलं ह्रस्वाग्रं द्वौ मणी शृंगमग्रतः।
मकुटे पार्श्ववद्वर्णविन्यासोऽपि विधीयते।

अंकुशबन्धो यथा—

वारणार्वागगर्वाणामारणाद्घृततद्घृण।
वारमाशरदायादे देयादारशमारवा ॥

व्या— घृता दीप्ता तस्य रामस्य घृणा दया आशरदायादे राक्षसपुत्रे वारणाः गजाः अर्वन्तो हयाश्च ते अगा इव तत्रयुक्तानां गर्वाणां आरणात् अल्परणात् आङीषदर्थे वारं निरोधं देयात् तृतीयचतुर्थपादयोः हलबन्धवत् अर्थः॥ अस्योद्धारः—

रेखाभ्यामायतं काण्डं अग्रे तीक्ष्णाग्रशृंगकम्।
शृंगादधस्तात्कोष्ठौ द्वौ पार्श्वे कृत्वैककोष्ठकम्।
अधोमुखामूर्ध्ववक्रां लिखेद्धारां त्रिरेखिकाम् ॥

विन्यासः—

शृंगे ततोधरे पार्श्वेऽप्यधो वीथ्यां च पार्श्वके।
आद्यः पादो दले चोर्ध्वे पार्श्वे वीथ्यामथोपरि।
पुनः पार्श्वेऽप्येवमाद्यम् अर्धं कृत्वा गतागतात्।
तृतीयतुर्यौ शृंगात्तु काण्डे कुर्याद्गतागतात्।

अंकुशे परशौ चैवं चन्द्रार्धोपमधारिके।
अयं परशुबन्धोऽपि काण्डं तत्र त्रिशृंगकम्।

**ऊर्ध्वनागबन्धो यथा—**

**विभाविनी विश्वसूते रामनद्यतिनस्तमः।**
**तेनाभिविधिनाभासां भावितेन नते विभा॥**

व्याः— तेन प्रसिद्धेन भासामभिविधिना व्याप्त्या भावितः प्रकाशितः इनः सूर्यो येन तस्य सम्बुद्धिः। स्वतेजोभूम्ना रवेरपि प्रकाशकारिन् इत्यर्थः। विश्वस्य जगतः सूते उत्पत्तिभूमे हे राम! विभाविनी प्रकाशनशीला ते विभा प्रभा तेजः न न द्यति न न खण्डयति खण्डयत्येव दोऽवखण्डने अस्योद्धारः।

द्विरेखादूर्ध्वनागौ च चतुर्वेष्टितकौ लिखेत्।
द्विपुच्छौ द्विफणौ मध्यमण्डलेषु द्विकोष्ठकौ॥

विन्यासः—

पुच्छादामूर्धसार्धाघ्रिरेकत्रान्यत्र शीर्षतः।
संधिकोष्ठचतुष्के स्यात्तुर्यः पादो गतागतात्॥

**कंकणबंधो यथा—**

**व्यासेनाम्नायाव्याहानाध्याराधीस्फारावायोया।**
**गोरेधा या मायान्यास्या श्रीरामेया गामे माधाः॥**

अस्योद्धारः—

रेखाद्वयेन द्वात्रिंशत्कोष्ठके मंडले क्रमात्।
श्लोकं न्यस्य चतुष्षष्टि श्लोका वाच्या गतागतैः॥

ते चतुःषष्टिरपि क्रमेण व्याख्यायन्ते—

पदानि— व्यासेन आम्नायावी आह अनाध्याराधी स्फारावायः या गोः एधाः या मायान्या अस्याः श्रीरामे याः गाः मा इमाः धाः॥ अर्थस्तु— व्यासेन आम्नायान् अवतीति आम्नायावी अनस्य वायोराधि आराधयति प्राप्नोतीति तथा। "बंधनं व्यसनं

चेतः पीडाधिष्ठानमाधयः" इत्यमरः। "आराधनं साधने स्यादवाप्तौ तोषणेऽपि च" इति च। तदंशं प्राप्त इत्यर्थः। स्फारावायः स्फीतबोधः। यागौर्मायान्या अस्या गोर्वाचः एधाः समृद्धिरूपाः याः गाः वाचः श्रीरामे विषये मामाह। ब्रूञो दुहादित्वाद्विकर्मकत्वम्। इमा वाचो मा धाः इति प्रतिभटं प्रत्युपालंभः॥ इति प्रथमः॥ १॥

सेनाम्नायाव्याहानाध्याराधीस्फारा वायो मागो।
रेधायामायान्यास्याश्श्रीरामे योगामे माधाव्या॥

पदानि— सेनाम्नायावी शेषं प्राग्वत्। मा अगो रे धाः याः याः मायान्यास्याः श्रीरामे याः गाः मे मा - धाव्या।

अर्थस्तु सेनाम्नायं सेश्वरवेदं वेदान्तमवतीति तथा अन्यस्याप्राणस्य आधिमधिष्ठानमाराधयति प्राप्नोतीति तथा। स्फारावायः स्फीतबोधः मायान्या आस्या स्थितिर्यासां ताः श्रीमद्धीरीरितैः वाक्यविरचनैरमेयाः याः गाः वाचः आह ताः रे अगोमाधाः मे मम तु मा बुद्धिर्धाव्या शोध्या तस्मात् मम तासां धारणमुचितम्। तव तु अशोधनीयबुद्धित्वात् तद्धारणमनुचितमिति भावः। विमतोपालम्भः पूर्ववत्॥ इति द्वितीयः॥ २॥

नाम्नायाव्याहानाध्याराधीस्यारावायो मागोरे।
धाया मायान्यास्याश्श्रीरामे यामाधाव्यासे॥

नाम्ना अयावि मागः रे धायाः श्रीरामे याः गाः माः इमाः धाः व्यासे। नाम्ना नामधेयेन अयं शुभावहविधिं अरतीति तथा। व्यासरूपे श्रीरामे श्रीपतौ मां मानं प्रामाण्यं गच्छतीति मागः अनाध्याराधीः पूर्ववत्। स्फारावायः दधतीति धायाः। श्याद्व्यध - इत्यादिना णप्रत्ययः। तत्त्वपोषिणीत्यर्थः। माधान्यास्याः पूर्ववत्। याः गाः वाचः आह रे इमा माधाः। इति प्राग्वत्॥ इति तृतीयः॥ ३॥

म्नानाव्याहानाध्याराधीस्फारावायोमागोरेधाः।
यामायान्यास्या श्रीरामे या गामे माधाव्यासेनाः॥

म्रायमभ्यासमवतीति तथा अनाधाराधीस्फारावायः या गौर्मायान्या मिथ्यात्वरहिता अस्यागोर्वाचः एधाः समृद्धिव्याख्यानरूपाः व्यासेनाः व्यासकर्तृकाः श्रीरामेयाः गा मां आह इमाः माधाः ॥ इति चतुर्थः ॥ ४ ॥

**याव्याहानाध्याराधीस्फारावायोर्मागोरेधायाः ।**
**मायान्यास्या श्रीरामे यागामे माधाव्यासेनाम्रा ॥**

याः व्याह गोः एधायाः व्यासे ॥ व्यासे एधाया वर्धमानाः गोर्ब्रह्मसूत्रस्य श्रीरा श्रीप्रदाः वृद्धिकरीः अत एवामेयाः या गाः वायोः मामाह इमा नाम्रापि माधाः ॥ इति पञ्चमः ॥ ५ ॥

**व्याहानाध्याराधीस्फारा वायोमागोरेधायामाः ।**
**यान्यास्या श्री रामे यागामेमाधाव्यासेनाम्रायाः ॥**

व्या— व्याह शेषं प्राग्वत् । मा गोः एधायामाः याः न्यास्याः श्रीरामेयाः गाः माः । इमाः धाः व्यासेनाम्रायाः । गोः वेदस्य एधयतीत्येध । आयामो दैर्घ्यं यासां ताः व्यासैनः व्यासस्वामिकः अम्रायः ब्रह्मसूत्रं यासु ताः । न्यसितुम् उपन्यसितुं योग्याः न्यास्याः । या गा मा मां आह इमाः माधाः ॥ इति षष्ठः ॥ ६ ॥

**"हानाध्याराधीस्फारावायोमागोरेधायामायाम् ।**
**न्यास्या श्रीरामे यागामेमाधाव्यासेनाम्रायाव्याः ॥**

हा न । अध्यार अधीः एधायाः मायां न्यास्य अश्रीरां एधाः व्यासेन अम्राय आव्याः शिष्टं प्राग्वत् ॥ हे अधीः अबुद्धे ! एधायाः वर्धमानायाः गोः वेदात् अश्रीरां मायां न्यास्य निरस्य एयाः ज्ञेयाः "ईङ् गताविति" धातोः अचो यदिति यत्प्रत्ययः । व्यासेन आम्नाय अभ्यस्य अव्याः रक्षणीयाः गाः मानाध्यार अधिजगामैव । माशब्दो नञर्थः । हा इमाः माधाः ॥ इति सप्तमः ॥ ७ ॥

**नाध्याराधीस्फारा वायोमागो रेधायामायान्याः ।**
**स्याश्रीरामे यागामेमा धाव्यासेनाम्रायाव्याहा ॥**

व्या— हे अधीः व्यासेन अम्राय अभ्यस्य आव्याः पालनीयाः यामायान्याः गोर्वेदस्य या एधा समृद्धिः व्याख्याः मानाध्यार अधिजगामैव इमा माधाः श्रीरासु श्रीसूक्तिषु अमेया गाः अमितापराधश्च स्याः हा । इत्यष्टमः ॥ ८ ॥

ध्याराधीस्फारावायोमागोरेधायामायान्यास्याः ।
श्रीरामेयांगामेयाधाः व्यासेनाम्नायाव्याहाना ॥

व्या— गोः एधाः या मायान्याः अस्याः व्यासेनाम्नायावी आह अना । श्रीरामे एधि । यमाराधयतां ति साधयन्ती तथा व्यासेनं व्यासकर्तृकमाम्नायमावतीति तथा । अना अमनुष्यः देवांशत्वात् या मायान्या अस्याः गोः ग्रन्थस्य एधाः समृद्धीः याः गाः मा माह इमाः मा इयाः ॥ इति नवमः ॥ ९ ॥

राधीस्फारावायोमागोरेधायामायान्यास्याश्रीः ।
रामे यागा मे माधाव्यासेनाम्नाया व्याहानाध्याः ॥

व्या— व्यासेन हेतुना आम्नायावी देवरक्षकः श्रीरामे विषये राधी पूजकः स्फारावायः स्फीतबोधः एधायाः वर्धमानायाः गोः वेदस्य माधान्या आस्थायाः स्थितेरश्रिः कोटिः अवसानं (पर्यवसानं) तात्पर्यसीमा यासां तादृशीः अनाध्याः अप्रार्थनीयाः नाधतेः कर्मणि ण्यत्प्रत्ययः या गा मा माः इमा माधा इति दशमः ॥ ॥१० ॥

धीस्फारावायोमागोरेधाया मायान्यास्या श्रीराः ।
मे यागामे माधा व्यासेनाम्नाया व्याहा नाध्याराः ॥

गोः एधाः या मायान्या अस्याः श्री अनाध्याराः शेषं प्राग्वत् । ध्यायतीति धीः ध्यानशीलः ध्यायतेः संप्रसारणं च इति कर्तरि क्विप् । बुद्धितद्वतोरभेदाद्वा धीरित्युपचर्यते । व्यासेनाम्नायावी स्फारावायः या गौर्मायान्या अस्याः गोर्वेदस्य एधाः समृद्धीः श्रीराः सम्पत्प्रदाः आधिर्मनोव्यथा आरं शत्रुसमूहः ताभ्यां रहिताः मेयाः ज्ञातव्याः याः गाः मा माः इमाः माधाः ॥ इत्येकादशः ॥ ११ ॥

स्फारावायो मागोरेधा यामायान्यास्या श्रीरामे ।
यागामे माधाव्यासेनाम्नाया व्याहानाध्याराधी ॥

व्या— व्यासेनाम्नायावी अनाध्याराधी स्फारावायः या मायान्या अस्याः गोः वेदस्य एधाः समृद्धीः या गाः श्रीरामे विषये मामाह इमा माधाः ॥ इति द्वादशः ॥ ॥१२ ॥

**रावायोमागोरेधायामायान्यास्याश्रीरामेयाः ।**
**गामेमाधाव्यासे नाम्नायाव्या हानाध्याराधीस्फाः ॥**

व्या— रा वा रा इव धनमिव अयो वा शुभावहविधिरिव च विद्यमानः व्यासेनाम्नायावी धिया बुद्ध्या स्फायत इति धीस्फाः स्फीतबोधः एधायाः गोर्वेदस्य अनाध्याराः मनःपीडाशत्रुसमूहरहिताः मायान्यास्या या गाः श्रीरामे विषये मामाह इमा माधाः ॥ इति त्रयोदशः ॥ १३ ॥

**वायो मागोरेधा या मायान्यास्या श्रीरामे या गाः ।**
**मेमाधा व्यासेनाम्नाया व्याहानाध्याराधीस्फाराः ॥**

व्या— वा अयः अयो वा शुभविधिरिव अनाध्याराधी व्यासेनाम्नायावी या मायान्या अस्याः गोर्वेदस्य एधाः समृद्धीः स्फाराः प्रचुराः श्रीरामे याः गाः मा याः इमाः माधाः । इति चतुर्दशः ॥ १४ ॥

**यो मागोरेधा यामायान्यास्या श्रीरामे या गा मे ।**
**माधा व्यासेनाम्नाया व्याहानाध्याराधीस्फारावा ॥**

व्या— याः मागो रेधाः या मायान्या अस्याः श्रीरामे याः गाः मे मा अधाः व्यासः इनाम्नायावी अनाध्याराधीस्फाः राः वा इनयुक्त आम्नायः इनाम्नाय वेदान्तः तद्रक्षी यः धीस्फाः धीपूर्णः या गौः मा यान्या अस्याः गोः वेदस्य एधाः समृद्धीः श्रीरैः श्रीमदीरणैः अमेधाः गाः वाचो मामाह । स एव मे अधाव्या धवयितुमशक्या मा लक्ष्मीः स एव रा वा धनं वा । इति पञ्चदशः ॥ १५ ॥

**मागोरे धायामा यान्यास्या श्रीरामे यागामेमाः ।**
**धाव्या से नाम्नाया व्याहानाध्याराधीस्फारावायो ॥**

व्या— मागोरे अधाः याः मायान्यास्याः श्रीरामे याः गाः मे माः धाव्यासा इनाम्नाया व्याह ह अनाध्याराधीः स्फाराः । हशब्द आमन्त्रणे । धीरेव स्फाः स्फीता राः यस्य तत्सम्बुद्धिः हे वायो मायान्यास्याः श्रीरैरमेयाः या गाः वाचः मागोरे मानोद्यमे शास्त्रे अधाः अपुष्णाः सा मे इनाम्नायेन सेश्वरमीमांसया आव्या रक्ष्या अनाध्याराधा व्याशोध्य गम्या वा माः मानं माङः क्विप् विधेयप्राधान्यविवक्षया सेत्येकवचनमिति ॥ षोडशः ॥ १६ ॥

गोरे धाया मायान्यास्या श्रीरामे यागामे माधाः ।
व्यासेनाम्नाया व्याहानाध्याराधीस्फारावायो मा ॥

व्या— प्रथमश्लोकेन तुल्यार्थोऽयं सप्तदशः ॥ १७ ॥

रेधायामायान्यास्या श्रीरामेयागामे माधाव्या ।
सेनाम्नायाव्याहानाध्याराधीस्फारावायो मागो ॥

व्या— इति द्वितीयेन तुल्यार्थोऽयमष्टादशः ॥ १८ ॥

धायामा यान्यास्या श्रीरामे यागामेमाधाव्यासे ।
नाम्नायाव्याहानाध्याराधीस्फारावायो मागोरे ॥

व्या— इति तृतीयेन तुल्यार्थोऽयम् एकोनविंशः ॥ १९ ॥

यामायान्यास्या श्रीरामेयागामे माधाव्यासेनाः ।
म्नायाव्याहानाध्याराधी स्फारावायो मागो रेधाः ॥

व्या— इति चतुर्थेन तुल्योऽयं विंशः ॥ २० ॥

मायान्यास्या श्रीरामे यागामे माधाव्यासेनाम्ना ।
याव्याहानाध्याराधी स्फारा वायो मागोरे धायाः ॥

व्या— इति पञ्चमेन तुल्यार्थोऽयमेकविंशः ॥ २१ ॥

यान्यास्या श्रीरामे यागामे माधा व्यासेनाम्नाया ।
व्याहानाध्याराधीस्फारावायो मागोरे धायामाः ॥

व्या— इति षष्ठेन तुल्यार्थोऽयं द्वाविंशः ॥ २२ ॥

न्यास्या श्रीरामे यागामे माधा व्यासेनाम्नायाव्याः ।
हानाध्याराधीस्फारावायोमागोरेधायामायाः ॥

व्या— इति सप्तमेन तुल्यार्थोऽयं त्रयोविंशः ॥ २३ ॥

स्याश्रीरामे या गामे माधाव्यासे नाम्नाया व्याहा ।
नाध्याराधीस्फारावायो मागोरेधायामायान्याः ॥

व्या— इति अष्टमेन तुल्यार्थोऽयं चतुर्विंशः ॥ २४ ॥

श्रीरामेया गामे माधाव्यासेनाम्नायाव्याहना।
ध्याराधीस्फारावायो मागोरेधायामायान्यास्याः ॥

व्या— इति नवमेन तुल्यार्थोऽयं पञ्चविंशः ॥ २५ ॥

रामेया गामे माधाव्यासेनाम्नायाव्याहानाध्याः।
राधीस्फारावायो मागोरेधायामायान्यास्याश्रीः ॥

दशमेन तुल्यार्थोऽयं षड्विंशः ॥ २६ ॥

मेया गामे माधाव्यासेनाम्नायाव्याहानाध्याराः।
धीस्फारा वायो मा गोरेधायामायान्यास्या श्रीराः ॥

एकादशेन तुल्यार्थोऽयं सप्तविंशः ॥ २७ ॥

यागामे माधा व्यासेनाम्नायाव्याहानाध्याराधीः।
स्फारा वायो मागोरेधायामायान्यास्या श्रीरामे ॥

इति द्वादशेन तुल्यार्थोऽयमष्टाविंशः ॥ २८ ॥

गामे माधा व्यासेनाम्नाया व्याहानाध्याराधीस्फाः।
रा वायो मागो रेधायामाया न्यास्या श्रीरामेयाः ॥

इति त्रयोदशेन तुल्यार्थोऽयमेकोनत्रिंशः ॥ २९ ॥

मे माधा व्यासेनाम्नायाव्याहानाध्याराधीस्फाराः।
वायो मागो रेधा यामायान्यास्या श्रीरामे यागाः ॥

इति चतुर्दशेन तुल्यार्थोऽयं त्रिंशः ॥ ३० ॥

माधाव्यासेनाम्नाया व्याहानाध्याराधी स्फारावाः।
यो मागोरेधा या मायान्यास्या श्रीरामे यागामे ॥

इति पंचदशेन तुल्यार्थोऽयमेकत्रिंशः ॥ ३१ ॥

**धाव्यासेनाम्नायाव्याहा नाध्या राधी स्फारा वायो: ।**
**मागोरेधायामा यान्यास्या श्री रामे या गा मे मा: ॥**

इति षोडशेन तुल्यार्थोऽयं द्वात्रिंशः ॥ ३२ ॥

अस्यैव प्रातिलोम्येन क्रमात् द्वात्रिंशत् श्लोकाः संभवन्ति ।

**प्रातिलोम्येन प्रथमप्रकारोऽयं कंकणबंध: । तथाहि—**

**धामामेगायामेराश्री: स्यान्याया मायाधारेगो ।**
**मायो वारा स्फाधीराध्याना हाव्या याम्ना नासेव्या: ॥**

पदानि— धामा मे अगायामा इरा श्रीः स्यात् न्यायाः मायाः धाः रे, अगो मा अयः अवाराः स्फा धीराध्याना हान्यायाः । म्नाना सेव्याः । अम गतौ अमो गतिः । धामा मे प्रभावगतौ । अगस्य पर्वतस्येवायामो दैर्घ्यं यस्याः सा इरा वाक् श्रीः संपच्च स्यात् । न्यायाः शास्त्राणि स्युः । अयः शुभविधिर्वा एते म्नानेनाभ्यासेनासेव्याः । किंतु स्फाः स्फीताः स्फायतेः कर्तरि क्विप् । धीर्यस्य स्फाधीयः स्फीतबोधस्य राधेराराधनस्य आनाहेन दैर्घ्येण 'दैर्घ्यमायाम आरोहः' इत्यमरः । आव्यः रक्षणीयः आयो लाभः येषां ते अत एव अवाराः अनिरोधाश्च स्युः न विद्यते गौर्वाक् दृष्टिर्वा यस्य असावगुः । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । तस्य संबुद्धिः । रे अगोमायो वंचनानि माधाः इति विमतोपालंभ इति प्रथमः ।

प्रातिलोम्येन द्वितीयः ॥

**यामे गाया मेरा श्री स्यान्याया मायाधारेगो मा ।**
**यो वारास्फाधी राध्यानाहान्यायाम्नानासेव्याधाः ॥**

मा मे अगा या मा इरा मायाः धाः रे अगो मायः वाराः मे मम अगा निश्चला या माः ज्ञानं तादृशी मा लक्ष्मीः इरा वाक् तादृशी या श्रीश्च शोभा च स्यात् । न्यायाः शास्त्राणि यो वा राः धनं एतेनाम्नानेनाभ्यासेन आसेव्या लभ्या आधा आधानं येषां ते किंतु स्फाधियः स्फीतबोधस्य राध्येनानाहेन आव्यः आयो येषां ते तादृशाः स्युः । हे अगो अस्मिन्नर्थे मायाः वंचनानि माधाः ॥ २ ॥

**मे गायामे राश्री स्यान्याया मायाधारेगो मायो ।**
**वारास्फाधी राध्यानाहा न्यायाम्रानासेव्याधामा ॥**

मे गायाम इरा श्रीः स्यात् न्यायाः मायाः धाः रे गोमायो वाराः स्फाधीः राध्या अना आह आव्याः याः म्रानासेवी आधामा । म्रानमभ्यासं सेवितुं शीलमस्येति तथा आगतो धामानि प्रभावान् आधा मा राध्या स्वभावेन अना अमनुष्यः देवांशत्वात् स्फाधीः स्फीतबोधः अव्याः रक्षणीयाः या इराः वाचः आह 'यत्तदोर्नित्यसंबंधात्' ता इराः मे मानाय ज्ञानाय माङः क्विबन्ताच्चतुर्थ्येकवचने भत्वात् आतो धातोरित्यालोपः । गायाम गातुमिच्छामः । आशिषि लोट् । ततश्च श्रीस्स्यात् । न्यायास्स्युः । रा वा धनं च स्यात् । रे गोमायो जंबुक ! त्वं या इराः मा धाः न धेहि ता गायाम इति तृतीयः ॥

चतुर्थप्रकारः ॥

**गायामेराश्रीस्यान्यायामायाधारे गोमा यो वा ।**
**रास्फा धीराध्या नाहाव्याया म्रानासे व्या धामामे ॥**

अना अमनुष्यः म्रानासेवी आधामा स्फाधीः स्फीतबोधः राध्या संसिद्ध्या आव्या गोपनीयाः या इराः आधारे विषयभूते हरौ मे मानाय आह ता इराः गायाम ।

ततश्च श्रीः स्यात् । न्यायानां अमाया सत्यत्वं स्यात् । गाः मिमीते गोमायाः "ह्वावामश्च" (३-२-२) इति कर्मण्युपपदेऽणप्रत्ययः । तादृशो रा वा धनं वा विद्येत्यर्थः । सोऽपि स्यात् इति चतुर्थः ॥

प्रातिलोम्येन पंचमप्रकारः

**या मे रा श्री स्यान्याया मायाधारे गोमायो वाराः ।**
**स्फाधीराध्यानाहाव्यायाम्रानासेव्यायाधामेगाः ॥**

अर्थः पूर्ववत् प्रायेण । स्फारा धीः एवं भूताः याः गाः आह ताः याम भजाम । ततश्च इरा श्रीः वाक् संपत् स्यात् । गो मायः गवां वाचामियत्तया गणनक्षमः राः धनं वा विद्येत्यर्थः । स च स्यात् इति पंचमः ॥

प्रातिलोम्येन षष्ठः प्रकारः

मेराश्री स्यान्याया मायारे गो मायो वारा: स्फा: ।
धीराध्या नाहाव्यायाम्रानासेव्याधामा मेगाया: ॥

धीराध्या ज्ञानसंसिध्या अना अमनुष्यः म्रानासेवी । आधामा आधारे विषयभूते हरौ आव्या आयो लाभः यासां ताः याः गाः आह त एव मे मा लक्ष्मीः इरा वाक् श्रीः संपत् न्यायानां शास्त्राणां अमाया प्रामाण्यं गोमायः वाक्संख्यानदक्षः स्फाः स्फीतः रा व धनं च इति षष्ठः ॥

सप्तमप्रकारः

राश्रीस्यान्यायामायाधा रे गोमायोऽवारा स्फाधीः ।
राध्यानाहाव्यायाम्रानासेव्याधामामेगाया मे ॥

रे गोमायो वंचक अवाराः अमिताः याः गाः त्वं माधाः राध्या संसिद्ध्या अना अमनुष्यः आव्यस्य अयस्य शुभावहविधेः आन्मानमभ्यासावृत्तिं आसेवितुं शीलमस्येति तथा । आधामाः स्फाधीः मे मानाय या गा आह ता एव मे राः श्रीः स्यात् न्यायाश्च स्युः ॥ इति सप्तमः ॥

प्रातिलोम्येनाष्टमप्रकारः

श्री स्यान्यायामायाधारेगोमायोवारास्फाधीराः ।
ध्यानाहाव्यायाम्रानासेव्याधामामेगायामेराः ॥

म्रानासेवी आधामा आस्फाधीराः आस्फीतबोधधनं ध्यानाहेन ज्ञानवैपुल्येन आव्यायः रक्षणीयः लाभः या गाः वाचः मे मायावाराः अवगतवान् । रे गोमायो यास्त्वं माधाः । ता एव मे रा स्यात् । श्रीः स्यान्यायाश्च ॥ इत्यष्टमः ॥

नवमः प्रकारः

स्यान्यायामायाधारेगोमायो वारास्फाधीराध्याः ।
ना हाव्यायाम्रानासेव्याधामा मे गायामे राश्रीः ॥

स्फाधिया स्फीतबोधेन राध्याः नाहेन बंधेन अपरित्यागेन आव्यायाः रक्षणीयलाभाः अत एव म्रानासेव्याः इराः वाचः धामामे प्रभावयुक्ते आधारे विषयभूते

हरौ गायाम ततश्च श्रीः स्यात् । न्यायानाममाया अमिथ्यात्वं गोमायः वाचां परिमाता रा वा विद्यारूपं धनं च स्यात् ॥ इति नवमः ॥

दशमः प्रकारः

**न्यायामायाधारे गोमायो वारास्फाधीराध्याना ।**
**हाव्यामाम्नानासेव्याधामा मे गायामे रा श्रीः स्यात् ॥**

न्यायानामामायाधाः सत्यत्वपोषिणीः आव्यायाः रक्षणीयलाभाः याः गाः वाचः राध्या संसिद्ध्या अना अमनुष्यः म्नानासेवी आधाम्ना स्फाधीरवार अवजगाम । ता एव मे मानाय स्युः । ततश्च राः श्रीश्च स्यात् । रे गोमायो इति दशमः ॥

प्रातिलोम्येन एकादशद्वादशप्रकारौ कंकणबंधौ

**यामायाधारेगोमायोवारास्फाधीराध्यानार्हाः ।**
**व्यायाम्नानासेव्याधामामेगायामेराश्रीस्यान्याः ॥**

या माया आधारे गोमायो आवारा स्फाधीराः ध्यानार्हाः व्यायाम्नानासेव्याः धामामेगाय अमेराश्रीः स्य अन्याः आधारे प्रपंचे गोमायो वंचक मिथ्यात्ववादिन् ! यामाय नियमनाय सत्यत्वनिबंधनाय अवाराः अनिरोधाः व्यायेन विशिष्टलाभेन आम्नायेन आसेव्याः अधियः आनाहो याभिस्ताः स्फाधीराः श्रीपूर्णबोधवाचः माधाः किंच मे ज्ञानाय मा गाय । हे अमेरा श्रीः मानवाक्संपद्रहित अन्याः तदितरा वाचः स्य निवर्तय । 'षोऽन्तकर्मणि' इत्यस्माल्लोण्मध्यमैकवचनम् । इत्येकादशः ।

**मायाधारे गोमायो वारास्फाधीराध्यानाहाव्याः ।**
**याम्नाना सेव्याधामामे गायामेराश्रीस्यान्यायाः ॥**

मायाः धाः रे अगो मा अयः वा राः शेषं प्राग्वत् । अयो वा शुभावहविधिरिव रा वा धनमिव च विद्यमानः राध्या अना अमनुष्यः म्नानासेवी आधामा स्फाधीः या इरा आह मे मानाय ताः गायाम ततश्च श्रीः स्यात्, न्यायाश्च स्युः हे अगो अदृष्टे मा धाः वंचनानि मा धाः इति द्वादशः ।

त्रयोदशः

या धारे गोमायो वाधी स्फाधीराध्या नाहा व्यायाः ।
म्रानासेव्याः धामा मे गाया मे राश्री स्यान्त्र्या यामा ॥

हे अगो यास्त्वं माः धाः पूर्ववद्विशेषणविशिष्टाः । स्फाधीर्या गा आह ताः याम भजाम । ततश्च न्यायाः मा नितांतदैर्घ्या इरा श्रीः वाक्संपत् स्यादिति त्रयोदशः । ।

धारे गोमायो वारा स्फाधीराध्यानाहाव्यायाम्राः ।
नासेव्याधामा मे गायामेरा श्री स्यान्याया माया ॥

विशेषस्तु राध्या न आह । अव्यायाम्राः । ना आसेवी अं विष्णुमासेवत इति आसेवी । आधामासः मे मानाय स्फाधीः राध्या स्वभावेन आव्या रक्षणीयलाभा आम्रा अभ्यासो यासां ताः याः गाः न नाह आहैव रे अगो तास्त्वं मा धाः ततश्च मे राः धनं न्यायेष्वमाया मायाराहिता श्रीः संपत् स्यात् । इति चतुर्दशः ॥

रे गोमायोऽवारास्फाधीराध्यानाहाव्यायाम्राना ।
सेव्या धामा मे गायामेरा श्री स्यान्यायामायाधा ॥

रे गोमायो वंचक ! आवाराध्या नाहेन धीदैर्घ्येण अव्यायं रक्षणीयलाभं आम्रानं यस्यास्सा सेव्या धामा मे प्रभावगतौ अगायाम पर्वतदीर्घा स्फाधीया राध्या इरा न्यायेषु अमायायाधा सत्यत्वधायिनी स्यादिति पंचदशः ॥

प्रातिलोम्येन षोडशप्रकारः

गोमायो वारास्फाधीराध्यानाहाव्यायान्मानासे ।
व्याधामामेगायामेराश्रीस्यान्यायामायाधारे ॥

हे गोमायो अवारास्फाधिया राध्याम्राना अभ्यासस्थितौ आनाहाव्याधा आनाह आबन्ध आसक्तिः तेन रक्षणीय लाभा मामे मानगतौ अगायामा पर्वतदीर्घा मायाधारे कुहनाधिकरणे शास्त्रे व्याधा व्यधनकर्त्री ॥ 'श्याद्व्यधा' इति णप्रत्ययः । इरा श्रीः वाक्संपदेव न्याया स्यादिति षोडशः ॥

मायोवारास्फाधीराध्यानाहाव्यायाम्रानासेव्याः ।
धामामेगायामेराश्रीस्यान्यायामायाधारेगो ॥

इति प्रथमेन तुल्यार्थोऽयं सप्तदशः ॥

योवारा स्फाधीराध्यानाहाव्यायाम्नासेव्याधाः ।
मामेगा यामेराश्रीस्यान्या यामायाधारे गोमा ॥

इति द्वितीयेन तुल्यार्थोऽयमष्टादशः ॥

वारास्फाधीराध्यानाहाव्यायाम्नानासेव्याधामाः ।
मेगायामेराश्रीस्यान्यायामायाधारेगोमायो ॥

इति तृतीयेन तुल्यार्थोऽयमेकोनविंशः ॥

रास्फाधीराध्यानाहाव्यायाम्नानासेव्याधामामे ।
गाया मे रा श्री स्यान्यायामाया धारे गो मायोवा ॥

इति चतुर्थेन तुल्यार्थोऽयं विंशः ॥

स्फाधीराध्यानाहाव्यायाम्नानासेव्याधामामेगाः ।
यामेरा श्रीस्यान्न्यायामायाधारेगोमायो वाराः ॥

इति पंचमेन तुल्यार्थोऽयमेकविंशः ॥

धीराध्याना हाव्यायाम्नानासेव्याधामामेगायाः ।
मेराश्रीस्यान्न्यायामायाधारेगोमायोवारास्फाः ॥

इति षष्ठेन तुल्यार्थोऽयं द्वाविंशः ॥

राध्यानाहाव्यायाम्नानासेव्याधामामेगायामे ।
राश्रीस्स्यान्यायामायाधारे गोमायोवारास्फाधीः ॥

इति सप्तमेन तुल्यार्थोऽयं त्रयोविंशः ॥

ध्यानाहाव्या याम्नेनासे व्याधामामेगायामेराः ।
श्री स्यान्यायामायाधारेगोमायोवारास्फाधीराः ॥

इत्यष्टमेन तुल्यार्थोऽयं चतुर्विंशः ॥

नाहाव्यायाम्नानासेव्या धामामे गायामेराश्रीः ।
स्यान्याया मा या धारे गोमायो वारास्फाधीराध्याः ॥

इति नवमेन तुल्यार्थोऽयं पंचविंशः ॥

हाव्यायाम्रानासे व्याधामामे गाया मेरा श्रीस्स्यात् ।
न्यायामायाधारे गोमायो वारास्फाधीराध्याना ॥

इति दशमेन तुल्यार्थोऽयं षड्विंशः ।

व्यायाम्रानासे व्याधा मामे गाया मेराश्रीस्यान्याः ।
या माया धारे गोमायो वारास्फाधीराध्यानाहाः ॥

इत्येकादशेन तुल्यार्थोऽयं सप्तविंशः ॥

या म्रानासेव्या धामा मे गायामेरा श्रीस्यान्यायाः ।
मायाधारेगोमायो वारा स्फाधीराध्यानाहाव्याः ॥

इति द्वादशेन तुल्यार्थोऽयमष्टाविंशः ॥

म्राना से व्या धामा मे गा या मेरा श्रीस्यान्यायामाः ।
याधारेगोमायो वारास्फाधीराध्यानाहाव्यायाः ॥

इति त्रयोदशेन तुल्यार्थोऽयमेकोनत्रिंशः ।

नासेव्याधामा मे गायामेरा श्रीस्यान्मायामाया ।
धारेगोमायो वारास्फाधीराध्यानाहाव्यायाम्राः ॥

इति चतुर्दशेन तुल्यार्थोऽयं त्रिंशः ॥

सेव्या धामा मे गाया मेराश्रीस्यान्यायामायाधा ।
रे गोमायो वारास्फाधीराध्यानाहाव्या याम्राना ॥

इति पंचदशेन तुल्यार्थोऽयमेकत्रिंशः ॥

व्याधामामे गायामेरा श्रीस्यान्यायामायाधारे ।
गोमायो वारास्फाधीराध्यानाहाव्यायाम्रानासे ॥

इति षोडशेन तुल्यार्थोऽयं द्वात्रिंशः । (आहत्य कंकणबन्धोऽयं श्लोकः) इहगतप्रत्यागतयोः सप्तदशादिद्वात्रिंशत्पर्यन्तानां श्लोकानामुत्तरार्धस्य पूर्वमर्थापने

प्रथमादिषोडशपर्यन्तैस्तुल्यार्थत्वं बोध्यम्। एवं रथगोपुरप्राकारादयो बंधाः कर्तुं शक्यन्ते।

कविबोधविकासेन चमत्कारभिदाजुषाम्।
बंधानामिह चित्राणामानंत्यादुपरम्यते ॥

प्रपंचनेन किंच नेत्रवंचना विलुंचने।
मुदं च तामुदं च तामयांचि ता विरिंचिता ॥

तपश्चिता विपश्चितां मया विना मया विना।
मलं मलं धुनाति कोऽधुना सुधींद्रसूक्तिषु ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य पदवाक्यप्रमाणपारावारपारीण
सर्वतन्त्रस्वतन्त्रश्रीमद्वैष्णवसिद्धान्त प्रतिष्ठापनधुरीण
श्रीविजयीन्द्रतीर्थश्रीपादशिष्य
श्रीमत्सुधीन्द्रतीर्थश्रीपादविरचितालंकारमंजरीव्याख्यायां
मधुधाराख्यायां बंधचित्रप्रकरणं समाप्तम् ॥

**अथ गतिनियममुदाहरति –**

**यामता भुविभातिप्रसादासारति ते गवि ।**
**विगतेति रसादासा प्रतिभाविभुता मया ॥**

अत्र सम्बुद्धिरध्याहार्या । हे विजयीन्द्रयोगिन् अतिप्रसादा अतिशयितवैशद्या ते तव मता यासौ भा स्फुरणं गवि वाचि आसारति निरंतरवृष्टिरिव आचरति । अविच्छिन्ना भवतीत्यर्थः । अत्ति आस्वादयतीत्यादरसस्यादारसादा सारग्राहिणीति यावत् । सा तादृशी प्रतिभायाः नवनवोन्मेषशालिन्या बुद्धेः विभुता वैभवं मया इति एवमुक्तप्रकारविशिष्टा विगता विशेषेण ज्ञाता । अत्र अवरोहक्रमेण पाठादुत्तरार्धं भवति । इयमर्धप्रत्यागतिः । श्लोकप्रत्यागतिर्यथा—

**या श्रितातनुराकामानाकालोरुपुरातनी ।**
**कादिमारमतेमाभूभारामा भुविसामरा ॥**

अस्य प्रातिलोम्येन पाठे श्लोकान्तरं भवति । यथा—

**राम सा विभुमाराभाभूमातेमरमादिका ।**
**नीतरा पुरुलोकानामाकारानुतताश्रिया ॥**

प्रथमश्लोकस्य पदानि— या श्रिता तनुः आकामा अनाकाला उरुपुरातनी कादिमा रमते मा भूभारामा भुविसामरा ॥

अर्थस्तु— हे राम आगताः कामाः यस्याः सा आकामा अवाप्तसमस्तकामा । आकालनमाकालः कलविक्षेप इति कालयतेः चौरादिकात् 'एरच्' प्रत्ययः । घञ् प्रत्ययो वा । स न विद्यते यस्याः सा अनाकाला क्षेपरहिता शाश्वतीति यावत् । उरुर्महती सा चासौ पुरातनी । विशेषणसमासः । कस्य ब्रह्मणः आदिमा कादिमा (ब्रह्मणः उपनिदानभूतेत्यर्थः) आदिभूतेत्यर्थः । माभुवोः श्रीभूम्योः भाभिः रामा मनोज्ञा माभूभारामा सामरा अमरैः सहिता सेव्यत्वात् । या ते तनुर्दिव्यमूर्तिः । श्रिता सेविता लोकैरिति शेषः ॥

द्वितीयश्लोकस्य पदानि— राम सा विभुमाराभा भूमा ते अमरादिका नीतरा पुरुलोकानां आकारानुतताश्रिया ॥ अस्यार्थः— या ते तनुः श्रिता लोकैः सेविता सा तनुस्तवमूर्तिः विभवति विशेषेण जायत इति विभुः मारस्य आभा भूमा कांतिबाहुल्यं

यस्याः सा मदनकांतेरपि विशिष्टकांतिसंपन्नेत्यर्थः । मादयति तृप्तिं योजयतीति मादिका अमराणां मादिका रावणवधादिना तेषां तृप्तिकरीत्यर्थः । मद तृप्तियोगे इति चौरादिकोऽयं धातुः । पुरुलोकानां सर्वलोकानां नीतरा अतिशयेन नेत्री 'सत्सूद्विष' इत्यादिना नयतेः क्विप् । ततोऽतिशयविवक्षायां तरप्प्रत्ययः । असाधारणसर्वलोकैश्वर्यशालिनीत्यर्थः । श्रिया लक्ष्म्या आकारानुतता आकारेष्ववतारेषु अनुतता अवतारानुगुण्येन सहचरितेत्यर्थः ।

**"राघवत्वेऽभवत्सीता रुक्मिणीकृष्णजन्मनि ।"**

इति भगवदवतारेषु लक्ष्मीसाहित्यं प्रसिद्धम् । अत्र सीता रूपया श्रिया सहितेत्यर्थः । तादृशी ते तनुः भुवि भूमौ रमते । दुष्टनिग्रहशिष्टरक्षणार्थं क्रीडति । यथा वा

**दावाभवादारिपुवाग्वनानां व्यासेन सेव्या तव योगिवर्य ।**
**माकांतकामा प्रतिलोमितापि विभात्यभिन्नार्थगुणातथागीः ॥**

हे योगिवर्य ! रिपुवाच एव वनानि तेषां दावाभो दावाग्निसन्निभो वादो यस्याः सा व्यासेन वेदव्यासेन सेव्या तेनापि श्लाघ्या चेदितरैः किमुतेत्यर्थः । माकांतं श्रीकांतं कामयत इति तथोक्ता तादृशी गीः प्रतिलोमितापि अन्यैर्विपर्यस्तापि अभिन्नार्थो गुणः पूर्वोक्तविशेषणत्रयं यस्याः तथाभूता सती विभाति ।

**अथ प्रहेलिकां लक्षयति—**

**प्रहेलिका तु प्रश्नानां स्याद्गूढोत्तरकल्पनम् ।**

तच्च बहुविधं आदिमध्यावसानेषु अंतरुत्तरा बहिरुत्तरा उत्तरगर्भा प्रश्नोत्तरा इत्यादिकम् । तत्र प्रश्नोत्तरमाह—

**कीदृशो विजयीन्द्रांघ्रिपल्लवो ब्रूत पंडिताः ।**
**यस्योत्तरं श्रीजयीन्द्र इति तत्प्रकृतोत्तरम् ॥**

विजयीन्द्र इत्युत्तरस्य यः प्रश्नः स एव कीदृश इत्यस्योत्तरमित्यर्थः । स तावत् कोमल इति बाह्यः कः अमलः इति पदभंगेन प्रश्नः अभंगेनोत्तरम् । यथा वा—

**'रामो रावणसंहारे कीदृगायोधने वद ।'**

यम इत्युत्तरस्यास्ति यः प्रश्नः स इहोत्तरम् । अत्र को दण्डधरः । बहिरुत्तरासु विच्छित्तिविशेषशालिनं भेदमुदाहरति—

**का वार्धांगं पुरारेः किटिवरविलसद्दंष्ट्रयाधारि का वा**
**को वा शेतेंऽबुराशौ युधि धरणिधवैः प्राप्यते को नु शूरैः ।**
**को वा नैवास्ति लक्ष्मीदितिजमथनयोः को गुरुर्निर्जराणां**
**वाच्यः को वा वदैतत्प्रतिवचनगतैर्मध्यवर्णैर्मुनीन्द्रः ॥**

का वा पुरारेरर्धांगं भवानी का वा किटिवरस्य वराहश्रेष्ठस्य दंष्ट्रया अधारि धृता मेदिनी अंबुराशौ कः शेते मुरारिः धरणिधवैः भूपतिभिः युधि कः प्राप्यते विजयः लक्ष्मीनारायणयोः को वा नास्ति वियोगः । निर्जराणां देवानां को गुरुः वागीशः । एतत्प्रत्युत्तरषट्कगर्तमध्यवर्णैः भवानीत्यादिषु वाशब्दादिभिः को वा मुनीन्द्रो वाच्यः इति प्रश्नस्य क्रमेण 'वादिराजयोगी' इत्युत्तरम् । बहिरुत्तरासु श्लेषेण विच्छित्तिविशिष्टमुत्तरं यथा—

**सौधाग्रभूमौ सुदतीं चरंतीं चंद्रोऽनुयुंक्ते तमियं च बाला ।**
**द्विषो जयीन्द्रैर्भुवि कीदृशास्ते त्वच्चूडमौलौ वद का स्फुरन्ति ।**

अब्जाक्षिप्ताः अत्र चन्द्रकृतप्रश्नस्य हे अब्ज चन्द्र आक्षिप्ता इति सम्बुद्धिपूर्वोत्तरम् । स्त्रीकृतप्रश्नस्य हे अब्जाक्षि चन्द्रचूडस्य हरस्य मौलौ प्ताः जटा इत्युत्तरम् ।

**को वा शौरे कुवलयदृशामाननश्रीविडंबी**
**गेहे सौख्यं भवति गृहिणां ब्रूहि पद्मे कुतो वा ।**

**इत्थं लक्ष्मीरिह मुररिपुं पृच्छती मामसौ च ।**
**ब्रूध्वं बाह्योत्तरमिह बुधाः श्लिष्टसंबुद्धिगूढम् ॥**

कमलेक्षणदारतः लक्ष्मीकृतप्रश्नस्य हे कमले क्षणदारतः चन्द्रः इत्युत्तरम् । हरिकृतप्रश्नस्य हे कमलेक्षण दारतः स्त्रीतः इत्युत्तरम् ।

अन्तरुत्तरासु अभिन्नप्रश्नोत्तरगर्भा यथा—

**स्यात्सभा कतमा रामे पूज्यमाने जयीन्द्र ते ।**
**कोपोचितस्त्वया चित्तात्कः पूर्णमतिरुच्यते ॥**

सभा कतमेति प्रश्ने भाभिस्सहिता सभा का अतिशयिता सा सभा कतमेत्युत्तरम् गर्भितम् । कः अपोहितो निरस्त इति प्रश्ने अहितः कोपः अपोहित इत्युत्तरगर्भत्वम् । पूर्णमतिः कः इति प्रश्ने कः वायुरित्युत्तररूपत्वम् । मारुते वेधसि ब्रध्ने पुंसि कः इति वचनात् ।

अन्तरुत्तरासु अनेकप्रश्नानां समस्तोत्तरत्वं यथा—

**विजयीन्द्रयतिर्वादे कीदृशः कीदृशः पुनः ।**
**आकाशः कीदृशो वादे सभास्तारस्त्रयं वदेत् ॥**

वादे विजयीन्द्रयतिः कीदृश इति प्रश्ने सभास्तार इत्युत्तरम् । सभामास्तृणोति समवैतीति सभास्तारः 'कर्मण्यण्' इति अणन्तः । पुनः स कीदृश इत्युक्ते सभायामस्तं क्षिप्तं आरं अरिसमूहो येनेति तदेवोत्तरम् । रात्रावाकाशः कीदृश इति प्रश्ने सभासः सकान्तयः तारा यास्मिन्निति तदेव समस्तमुत्तरम् । तत्र व्यस्तोत्तरत्वं यथा—

**वार्धिः कदा वृद्धिमुपैति बालः करोति किं को विरही निशासु ।**
**वादी जयीन्द्राद्विजयं लभेत चेच्चन्द्रोदये नृत्यति चक्रवाकः ॥**

व्यस्तसमस्तोत्तरत्वं यथा—

**राघवेन्द्रेण यतिना का वादे खण्ड्यते कुतः ।**
**वचोऽस्य चेतो वा कीदृक् वाधिधीरजयादृतम् ॥**

का खण्ड्यते वादिधीः कुतः अजयात् जयाभावात् अस्य वचः कीदृक् ऋतम् एतावद्व्यस्तोत्तरम् । अस्य चेतः कीदृक् इत्यस्य समस्तोत्तरं वादिधीरजयादृतम् इति ।

**अथ गूढं लक्षयति—**

**क्रियाकारकसंज्ञादेः गोपनं गूढमुच्यते ।**
**प्राभवं भजतां प्रीत्यै प्रवणो विजयीन्द्र ते ।**
**प्रसत्तय ऋषीन्द्राणां परिचारी भवत्यलम् ॥**

भजतां मध्ये प्रवणोऽहं ते प्रीत्यै प्राभवं समर्थोऽभवम्। प्रपूर्वाद्भवतेर्लङ्। अत्र प्राभवं प्रभुत्वमिति प्रतीतेः क्रियागोपनम्। तथाहि ऋषीन्द्राणां प्रसत्तये प्रसादाय परिचारी शुश्रूषमाणः अलं भवति। अत्र प्रसत्तये ऋषीन्द्राणामिति चतुर्थ्या अस्फुटत्वाद्विभक्तिगोपनम्। यथा वा—

सद्योवश्यमहो द्विषामिह विभा भाग्यस्य लब्ध्वापदम्।
भो भास्वद्भगवाननं नहरहर्भूम्नामुदेति क्षमः।
श्रीमत्तत्स्वदितस्त्रयीपथगतामीड्यः क्व तुल्योऽधिको
विंदामो विजयींद्र भावरमणे भावं भवत्यन्वहम्॥

भो विजयीन्द्र भास्वद्भग हे सूर्यतुल्य तेजः तृतीयं पन्थानं गच्छन्ति जानन्तीति तृतीयपथगाः ते वेदमार्गाभिज्ञाः गमः क्वौ इत्यनुनासिकलोपः तुगागमश्च। तेषामीड्य वंद्य सूर्यस्य त्रयीमूर्तित्वेन तत्सादृश्यादिति भावः। इहास्मिन् लोके विभाभाक् प्रतिभायुक्तः त्वमिति शेषः। द्विषां विमतानां महस्तेजः अवश्यं क्षपय शो तनूकरणे इत्यस्मादवपूर्वाल्लोण् मध्यमः किं कृत्वा अस्य विष्णोः अकारो विष्णुवाचकत्वेन प्रसिद्धः। पदं चरणमन्यत्राकाशं लब्ध्वा वालंब्य गवा वाचा किरणेन च अहरहस्सर्व दिनं नयन् भूम्ना प्राचुर्येण मुदे हर्षाय अतिक्षमः अत्यंतं समर्थः अहर्भूम्ना क्षम उदेतीत्यत्र श्रीमतः विद्यादिसंपन्नात् इतः एवंभूतात् त्वत्तः क्व वा तुल्यः न क्वापीत्यर्थः। भावरमणे आत्मारामे अथवा भावराणां ज्ञानश्रेष्ठानां मणे इति संबुद्धिश्च, भावरस्सूर्यस्तन्मणे इति प्रतीत्यन्तरं तादृशे भवति त्वयि भावमभिप्रायं विंदामः लभामहे। अत्र क्रियायास्सप्तविभक्तीनां च गोपनम्। विभा भाग्यस्येत्यत्र प्रथमायाः अवश्यमहो इति द्वितीयायाः भास्वद्भगवानयमित्यत्र तृतीयायास्संबुद्धेश्च भूम्नामुदेति क्षम इत्यत्र चतुर्थ्याः श्रीमत्तस्त्वदिति पंचम्याः त्रयीपथगामिति षष्ठ्याः भवतीत्यत्र सप्तम्या अवश्येति क्रियापदस्य च गूहनमिति विवेकः।

चतुर्थपादगूढं यथा—

परविद्वदजय्यजयी सदृश प्रचयस्व मतेतकविप्रणुत।
सुमनोविदृषिस्तुत शुभ्रविभम्।

अत्र चतुर्थपादस्तु गणांत्याक्षरैः विजयीशयते[1] वितनोषि शुभमिति भवति। सदृशप्रचरैरनुकूलविद्याप्रचारैः स्वमते तैः स्वमतं प्राप्तैः कविभिः प्रणुत विजयीशयते

१ पाः- विजयिन्द्रयते.

परविद्वद्भिरजय्यं जेतुमशक्यं जयति इति तथोक्तः सुमनो विद्वद्भिः देववेदिभिः शोभनहृदयविद्वद्भिर्वा ऋषिभिश्च स्तुता शुभ्रा दीप्ता विभा प्रतिभा यस्य तत्संबुद्धिः, तादृशस्त्वं शुभं वितनोषि । **अथ च्युतकं लक्षयन्नुदाहरति—**

**च्युतकं वर्णमात्रादेश्च्युतिरर्थान्तराप्तये ।**

**यथा—**

**वंचनाभिरतैर्भूरिसंख्यावद्भिर्जनैरहो ।**
**अपूर्वा प्राप्यते विद्या विजयींद्रत्वदाननात् ॥**

वंचनाभिरतैर्विप्रलिप्सुभिरपूर्वा अकारपूर्वा अविद्येत्यर्थः । अत्र वंचनेत्यत्र बिंदुच्युतकम् । संख्यावद्भिरित्यत्र बिंदुमात्राच्युतकम् । ततश्च वचनाभिरतैः संख्यवद्भिरपूर्वा अदृष्टपूर्वा असाधारणीत्यर्थः । प्रकारान्तरेणापि च्युतकमस्ति यथा साहित्यचिंतामणौ—

**शितनृशिरस्स्रजारचितमौलिशिरोमणिमौक्तिकैस्तथा**
**शिखरुचिरोर्ध्वदृक् पृथुलल्लाटतले तिलकश्रिया सदृक् ।**
**स्फुटविकटाट्टहासललितं वदनं स्मितपेशलं च तत् ।**
**प्रतिनवमीश्वरो वहति वेषमहो तुहिनाद्रिजार्धयुक् ॥**

अत्रार्धनारीश्वरवर्णनपरे चंपकमालिकाख्यवृत्ते पादानामाद्याक्षरद्वये अंत्याक्षरसप्तके च च्युते प्रमिताक्षरा नाम वृत्तमीश्वरवर्णनपरं भवति । यथा—

**नृशिरस्स्रजारचितमौलिशिरोरुचिरोर्ध्वदृक्पृथुलल्लाटतले ।**
**विकटाट्टहासललितं वदनं नवमीश्वरो वहति वेषमहो ॥**

आद्याक्षरसप्तके अंत्याक्षरद्वये च च्युते द्रुतविलंबिताख्यवृत्तमीश्वरीवर्णनं भवति । यथा—

**रचितमौलिशिरोमणिमौक्तिकैः पृथुलल्लाटतले तिलकश्रिया ।**
**सललितं वदनं स्मितपेशलं वहति वेषमहो तुहिनाद्रिजा ॥**

**यथा वा—**

सुरुचिरवासनामहितभूतलसत्प्रतिभाभरस्फुर-
च्छ्रुतिपथबोधनप्रतिपदोक्तयशस्सुमभृद्दिशादृता ।
जयवरराघवप्रमददायिमहामहसाधुनाथना-
च्चिरमतिसंपदास्वविजयीन्द्रयते जय तेजसा रिपून् ॥

सुरुचिरया अतिमनोज्ञया वासनया अभ्यासेन महिता श्लाघिता भूता युक्ता 'युक्ते क्ष्मादावृते भूतम्' इत्यमरः । लसन्ती या प्रतिभा तस्याः भरेण अतिशयेन स्फुरच्छ्रुतिपथानां वेदार्थप्रतिपादनरीतीनां बोधनेन ज्ञानेन प्रतिपदोक्तानि निरुपचाराभिहितानि यशांस्येव सुमानि पुष्पाणि बिभ्रतीति सुमभृतः दिशाः दिशः, ताभिरादृत पूजित हे विजयीन्द्रयते ! जयो वरो यस्मादसौ राघवः तस्य प्रमददायिनो हर्षकारिणो महामहस्य पूजादिमहोत्सवस्य साधुनाथनात् सम्यगाधिपत्यात् महोत्सवक्रियाधिकारात् अतिसंपत् अतिशयितविद्यादिसंपत् चिरमास्स्व रिपूंश्च जय ॥

अत्र 'नजभजजा जरौ मुनियतिर्यदि चंपकमालिका मता' इति चंपकमालिकावृत्ते पादानामंततो वर्णचतुष्टये च्युते नर्कुटकवृत्तं भवति ।

सुरुचिरवासनामहितभूतलसत्प्रतिभा
श्रुतिपथबोधनप्रतिपदोक्तयशस्सुमभृत् ॥
जयवरराघवप्रमददायिमहामहसा
चिरमतिसंपदास्वविजयीन्द्रयते जयते ॥

अत्रार्थः प्रायेण पूर्ववत् । विशेषस्तु तादृशप्रतिभा च श्रुतिपथवेदनं च ताभ्यां प्रतिपदोक्तयशांस्येव सुमानि बिभर्तीति तथा तत्संबुद्धिः । राघवस्य प्रमददायिना महामहसा ते तव कर्तुर्महोत्सवेन तादृशस्सन्नास्स्व जय उत्कर्षेण वर्तस्व च ॥

पादानामाद्याक्षरद्वये अंत्याक्षरसप्तके च च्युते 'प्रमिताक्षरं' नाम वृत्तं भवति । यथा—

चिरवासनामहितभूतलसत्पथबोधनप्रतिपदोक्तयशः ।
वरराघवप्रमददायिमहामतिसंपदास्स्व विजयींद्रयते ॥

चिरवासनया बहुलाभ्यासावृत्त्या महितस्य भूतले सत्पथस्य बोधनेन प्रतिपदोक्तं यशो यस्य तत्संबुद्धिः वरराघवस्य प्रमददायिनी महामतिसंपद्यस्य तादृशास्सन्नास्स्व । पादानामाद्याक्षरसप्तके अंत्याक्षरद्वये च च्युते द्रुतविलंबितवृत्तं भवति । यथा—

**महितभूतलसत्प्रतिभाभरप्रतिपदोक्तयशस्सुमभृद्दिशा ।**
**प्रमरदायिमहामहसाधुनास्स्वविजयीन्द्रयते जय तेजसा ॥**

पूर्वोक्ततादृशप्रतिभाभरेण प्रतिपदोक्तानि यशांस्येव सुमानि बिभर्तीति तथा तादृशो दिशो येन तत् । तेन सर्वा दिशः पुण्यभृत इव कुर्वाणेनेव प्रमददायिनि महामहोत्सवे साधु समर्थं तेन तेजसा प्रभावेन स्व आत्मीय ! विजयीन्द्रयते जय ॥

वृत्तांतरेऽपि च्युतकमूहितुं शक्यते । यथा वा—

**ज्ञातापदानपटवोऽन्यबुधेषु धीरा विज्ञानिनस्सदसि ते विजयीन्द्रवाचः ।**
**नो बिभ्रति प्रतिहतिं हृदि वीतशंकं सस्फूर्तयो यतिपते विमतामहितास्ताः ॥**

ज्ञातेन प्रसिद्धेन अपदानेन वृत्तकर्मणा पटवः महत्यः धीराः गंभीराः हृदि वीतशंकं सस्फूर्तयः स्फुरणयुक्ताः विमतानामहिताः प्रसिद्धास्ते तव वाचः प्रतिहतिं नो बिभ्रति । अत्र वसंततिलकावृत्ते पादानामाद्याक्षरे अंत्याक्षरद्वये च च्युते स्वागतावृत्तं भवति । तेन प्रतिवादिनामपजयो वर्ण्यते । यथा—

**तापदानपटवोऽन्यबुधेषु ज्ञानिनस्सदसि ते विजयीन्द्र ।**
**बिभ्रति प्रतिहतिं हृदि वीतस्फूर्तयो यतिपते विमता हि ॥**

अन्यबुधेषु त्वदन्यविद्वत्सु तापदानपटवः विमताः ज्ञानिनः ते सदसि वीतस्फूर्तयः युक्तिस्फुरणरहितास्सन्तः प्रतिहतिं बिभ्रति ॥

**इति चित्रप्रकरणं संपूर्णम् ।**

## अथ वक्रोक्तिः

**वक्रोक्तिः श्लेषकाकुभ्यामन्यथार्थस्य योजना ।**

श्लेषेण काक्वा वा केनचिदुक्तस्यार्थस्यान्यथा योजना वक्रोक्तिः । उदाहरति--

**विजयीन्द्राय ते स्वस्ति न कोऽपि विजयीन्द्रति ।**
**सर्वज्ञो विजयीन्द्रोऽयं भवानेव तथागतः ॥**

श्लेषवक्रोक्तिर्द्विविधा सभंगाभंगभेदात् । तत्र सभंगश्लेषवक्रोक्तेरुदाहरणं पूर्वार्धम् । विजयीन्द्रायेति चतुर्थ्यतया उक्तस्य विजयींद्रायेतियच्छब्दात् क्यच्प्रत्ययान्तात्शत्रंताच्चतुर्थीं मत्वा न कोऽपि विजयीन्द्रति विजयींद्र इव आचरतीति अन्यथा योजना । उत्तरार्धमभंगश्लेषवक्रोक्तेरुदाहरणम् । सर्वज्ञ इत्यस्य सुगतपरत्वेन अन्यथा योजना । यथा वा—

**का विद्यापतिता जयीन्द्र भवतः काचिन्न मे व्यस्रसत्**
**सर्वाधीरपि तेच्युतातिललिता तेनैव मे शोचिता ।**
**युक्तं नो परिभावशोचितरिपावन्येव भाति त्वयि**
**स्यान्मय्येव जितद्विषीति भवता (वदता) वादी त्वया निर्जितः ॥**

अत्र विद्यापतिता का विद्यापतित्वं किमिति वादिनोक्ते, काचिदपि विद्या न व्यस्रसत् न पतिता इत्यन्यथा योजना कृता । अन्योऽपि 'वित्' शब्दं बुद्धिपरं कृत्वा अतिललिता ते सर्वाधीश्च्युता इत्युक्तवान् । विजयींद्रोऽपि ते च्युतेत्यत्र अकारं प्रश्लिष्य अच्युते (अच्युतेप्यति) अतिललितेति योजयित्वा तेनैव मेशे लक्ष्मीशे उचिता परिचितेत्युक्तवान् । वादिना तु मे मम शोचिता दुःखित्वमित्यर्थं कृत्वा परिभावेन शोचितरि त्वयि पावनी परिशुद्धा धीः न भात्येव युक्तं इत्युक्तम् । अथ नो परिभावेन शोचितरि रिपौ त्वयि अन्या वाऽसाधारणी वेत्यर्थं कृत्वा जितद्विषि मय्येव सा स्यादिति वद । तेन त्वया वादी निर्जितः इति कवेर्वाक्यम् ॥

**अथ काकुवक्रोक्तिमुदाहरति—**

**स्वातन्त्र्यशालिनो नानाशास्त्रेषु प्रतिवादिनः ।**
**न जयेद्विजयीन्द्रोऽयं विजयीन्द्रो न जेष्यति ॥**

अत्र विजयीन्द्र इत्यन्वर्थायाः संज्ञायाः फलं दर्शयिष्यति वेति शंकमानं प्रति तदसहमानेन पुनरन्येन काकुप्रश्लेषात्तदेवोत्तरमुक्तम् । जेष्यत्येवेत्यर्थः ॥

**अथ श्लेषं लक्षयति—**

**अनेकार्थाभिधाश्लेषः श्लिष्यंतीत्यर्थतो मिथः ।**
**अष्टधायं वर्णपदलिंगभाषाविभक्तिभिः ॥**
**प्रकृतिप्रत्ययाभ्यां च वचनैरपि भेदकैः ।**

यथा मिथः श्लिष्यन्तीत्यर्थ इत्यनेन स्वभावादेकरूपा अप्यर्थभेदेन भिन्नाश्शब्दाः यत्र परस्परं श्लिष्यन्तोऽनेकार्थाभिधायिनः स श्लेष इत्यन्वर्थेयं संज्ञेत्युक्तं भवति ।

ननु प्रत्यर्थं शब्दभेद इति मते 'सकृदुक्तस्य शब्दस्य नानार्थप्रतिपादकत्वं न संगच्छते "सकृदुक्तस्य शब्दस्य लभ्यते नोभयार्थता"- इति न चास्मिन् पक्षे एकवृन्तावलम्बिफलद्वयन्यायः संभवति । अर्थभेदेन [१]शब्दभेद इति मतम् ।

सत्यमेतत् । तथाप्यर्थभेदेऽपि न शब्दभेद इति मतानुसारात् पृथक्प्रयत्ननिरासेन सकृदुक्तिविषयत्वलाभार्थं जतुकाष्ठन्यायेन क्षीरनीरन्यायेन वा मिथः श्लिष्यन्तः शब्दाः स्वरूपभेदापह्नवादैकरूप्येण यत्र प्रतीयन्ते सोऽयं शब्दश्लेष इति न लक्षणदोषः । तथोक्तं काव्यादर्शे—

**'वाच्यभेदेन भिन्ना यद्युगपद्भाषणस्पृशः (स्पृशम्) ।**
**श्लिष्यन्ति शब्दाःश्लेषोऽयमक्षरादिभिरष्टधा ॥' इति ।**

तं विभजते अष्टधेति । विधौ इत्यादिवर्णश्लेषः । 'सर्वदो माधवः पाया' दित्यादौ पदश्लेषः । 'श्रियं दधति(ती) ब्राह्मणी ब्रह्मकुले वा (ब्राह्मणकुले वा)' इत्यादिलिंगश्लेषः । शं लालयन्तं विशंकलेशं कलेशयं वम्(-विशशंकः शंकलये शिवम्) इत्यादौ भाषाश्लेषः । मागधीसंस्कृतयोरेकोच्चारणगोचरः । 'अतिशेषे गिरां गुंभे त्वं सर्वबुधमंडलम्' इत्यादौ विभक्तिश्लेषः । 'पातुं मुनिं पलादासून् प्रविवित्सति ते शरः' इत्यादौ प्रकृतिश्लेषः । 'यदि भार्यानुकूला स्यात्तदेव भविता

१ शब्दानां भिन्नत्वात् । स एष न्यायोऽर्थश्लेष एव । तत्र ह्यर्थभेदेऽपि न ।

सुखम्' इत्यादौ तृन्प्रत्ययतल्प्रत्यययोः श्लेषः। "अभजन्निर्मलांकीर्तिं धर्मस्य प्रभवो नरः" इत्यादौ वचनश्लेषः॥ **तत्र तावद्वर्णश्लेषमुदाहरति—**

**"जयीन्द्रवैरिणां ते च हृदि साधौ रुगुज्ज्वला"**

हे जयीन्द्र! वैरिणां साधौ आधिना मनः पीडया सहिते हृदि रुक् रोगः, उज्ज्वला, ते तव च साधौ साधुनि हृदि रुक् दीप्तिः स्फुरणम्। अत्र साधि साध्विति इकारोकारयोरेकोच्चारणगोचरत्वम्। अत्र साधि साधु इति इकारोकारयोरेकोच्चारणगोचरत्वम्। साधिनि साधुनि इति प्राप्ते तृतीयादिषु भाषितपुंस्कमित्यादिना पुंवद्भावः। यथा वा—

**निजां च द्वैषीं च स्वमतसरितो वेणयति यः**
**स्ववाक्चक्रासारैरणयति च यो बुद्धिमुभयीम्।**
**विनीतश्रद्धालौ विदितहृदयालौ स्वपरयो-**
**र्महाश्चर्यं तस्मिन् प्रकलयत योगींद्रयतिनि॥**

स्वमतमेव सरित् तस्याः वेणयति स्वबुद्धिं वेणीं प्रवाहं करोति द्वैषीं च बुद्धिं वेणुं करोति नदी यथा वेणुम(मु)पकर्षति तथा द्विषद्बुद्धिमपाकरोतीत्यर्थः। स्ववाक्चक्राण्येव चक्राणि रथांगानि तदासारैस्तत्प्रसरणैः स्वबुद्धिमणिं कीलकं करोति, द्विषद्बुद्धिमणुं करोति तस्मिन् योगीन्द्रयतिनि विनीताः शिक्षिताः श्रद्धालवः श्रद्धावन्तो येन तस्मिन्नात्मनि (स्वात्मनि) विदिता विखण्डिता हृदयमेवालिस्सेतुः यस्य तस्मिन् परे च महाश्चर्यं प्रकलयत प्रपश्यत। अत्रापीकारोकारयोरेव श्लेषः।

**अथ पदश्लेषमुदाहरति—**

**विजयींद्र त्वयाभाजि द्वयः कुवलयाहितः।**

कुवलयानां कुमुदानां अहितः सूर्यः त्वयाऽभाजि असेवि। कुवलयस्य भूमण्डलस्याहितः प्रपंचमिथ्यात्ववादी अभाजि भग्नः। 'भञ्जेश्च चिणि' इति नलोपः। यथा वा—

**शाताया जिह्मगोवर्धनमततगवामाब्धिकंसं शरारुः।**
**योगं तालांकजन्योद्धवमितमयिताभारिराधासुहृद्यः।**

**गोपीतार्योघजीवस्रुदपि (श्रुगदपि) कुवलयापीडतागोपहंता**
**सोऽव्यादाजीषुगव्या प्रसरसरसहद्राघवो यादवो वा ॥**

राघवपक्षे— अय गतावित्यस्माद् घञ् प्रत्ययः आयो गतिः शातायाः तीक्ष्णगतयः अजिह्मगा बाणा यस्य सः आब्धिकमब्धौ प्रसिद्धं गवामुदकानां वर्धनं छेदनं समुद्रजलशोषणमतत, तनुते स्म, यः संशरारुः सम्यक् हिंसकः सन् इतं प्राप्तं लांकं लंकायां भवं जन्यं युद्धमेव उद्धवः उत्सवः तं गंता साधु प्राप्तः 'तृन्' इति साधुकारित्वे तृन् प्रत्ययः। अयिताभाः प्राप्तद्युतिः यः विराधस्यासुहृत् गोभिः बाणैः पीताः अर्योघस्य शत्रुसमूहस्य जीवाः प्राणा एव स्रुत् प्रवाहः स्रवतेः संपदादित्वात् भावे क्विपप्रत्ययः। सः येन सः। गोशब्देन श्लिष्टरूपकम्। गावो बाणा एव गावः पशवस्तैः पीतः स्रुत् शत्रुप्राणप्रवाहः येन सः कुवलस्य भूमण्डलस्य आपीडनागसोः उपद्रवपापयोः अपहन्ता निवारकः [1]आजी(जि)षु युद्धेषु गव्यायाः बाणसमूहस्य प्रसरणे सरसं सवीर्यं हृत् यस्य स राघवो अव्यात्।

यादवपक्षे— अब्धिगवां शाताय सुखाय अजिह्मगोवर्धनगिरिम् अतत धृतवान् कंसं शरारुः घातुकः न लोकाव्ययनिष्ठा इति षष्ठीनिषेधात् द्वितीया। यः तालांकेन बलभद्रेण जन्यम् उत्पाद्यम्।

उद्धवेन मितं ज्ञातं योगं सन्नाहमुपायं वा अमिता गन्ता पूर्ववत् तृन्। भाविन्याः भाववत्याः राधायाः सुहृत् गोपीभिः तार्यः आक्रमितुं शक्यः अघस्य अघासुरस्य जीवं स्रवति गालयतीति तथा कर्तरि क्विप्। कुवलयापीडनाम्नो नागस्य उपहन्ता आजीषु समभूभागेषु गव्यायाः गोधनसमूहस्य इत्यदि शेषं पूर्ववत्। अयं पदश्लेषः पदवाक्यगतत्वेन द्विविधः पुनः प्रत्येकं प्रकृताप्रकृतोभयविषयत्वेन षड्विधः विकृतत्वाविकृतत्वाभ्यां पुनर्द्वादशविधः तत्र प्रकृतानेकगतः विषयः उदाहृतः। अप्रकृतानेकविषयो यथा—

**अप्रतियातनभोगाश्रितरूपौ सवसुधावसितभागौ।**
**योगीन्द्रव्रतिनेतुः गुरुभुजगौ जीवशेषतां यातौ ॥**

व्या— अप्रतियातनेन अनुपमेन भोगेन आश्रितं रूपं यस्य स शेषः अप्रतियाताः अनिवृत्ताः नभोगाः देवाः तैः आश्रितरूपः सम्यगाश्रितः 'प्रशंसायां रूपप्'

१ समे क्ष्मांशे रणेप्याजिः इत्यमरः।

स बृहस्पतिः वसूनां रत्नानां धावः शुद्धिः दीप्तिः तत्सहिता सवसुधावा तां सितभां गच्छतीति तथा शेषः, सवे यज्ञे सुधायां च अवसितः कल्पितो भागोंऽशो यस्य सः बृहस्पतिः गुरुभुजगौ बृहस्पतिभुजगेश्वरौ योगीन्द्रव्रतिपतेः जीवस्य आत्मनः शेषतां यातौ अंगभावं प्राप्तौ जीवः शेष इति च द्वयोर्नाम 'द्वन्द्वान्ते त्वत्प्रत्ययस्य प्रत्येकमभिसम्बन्धः'

उभयानेकविषयो यथा—

**सुधालसद्गुः सकलावदातः प्रशांतमोहः क्षपयन् प्रतीपम् ।**
**मित्राभितापं श्रमयन् जयीन्द्रो विभाति राकासखवत्प्रसन्नः ॥**

व्या— प्रशान्तमोहः प्रतीपं विपरीतवादिनं क्षपयन् सुधायां लसद्गुः विजृम्भितवाक् कलाभिश्चतुष्षष्ट्या विशुद्धः कलौ वादकलहे कलियुगे वा अदातः अखण्डितः मित्राणां सुहृदामभितापं शमयन् जयीन्द्रो राकासखवत् पूर्णचन्द्र इव प्रसन्नः सन् विभाति । सुधया अमृतेन लसन्त्यो गावः किरणाः यस्य सः सकलश्चासौ अवदातः परिपूर्णः निर्मलः प्रशाम्यतीति प्रशान् अनुष्णत्वात् । तमश्चाहश्च प्रतीपं क्षपयन् मित्रेण सूर्येण कृतमभितापं शमयन् सकलावदातः प्रशान्तमोहः इत्यत्र वाक्यगतश्लेषः, अन्यत्र पदगतः । एते त्रयोऽपि श्लेषाः वर्णानाम् आवापोद्वापाभ्यां विकृताः तदभावात् अविकृताः ।

तत्र विकृतेषु केवलप्रकृतगोचरो यथा—

**विराजचिह्नो विभवार्चितांघ्रिः श्रीज्याकृतांकः त्रिदशाननान्तः ।**
**अखण्डरूपो यमनादिराद्यो देवो मुदे वोऽस्तु स लक्ष्मणांकः ॥**

व्या— विराजो गरुडः चिह्नं यस्य सः विभवैर्वीतसंसारैर्मुक्तैरर्चितांघ्रिः श्रीज्याभ्यां लक्ष्मीभूभ्यां कृतांकः कृतलक्षणः त्रिदशाना मनने प्राणने अंतः निश्चयो यस्य 'अंतोऽस्त्यवसिते मृत्यौ स्वरूपे निश्चयेऽपि च' इति वैजयन्ती । लक्ष्मणः लक्ष्मीवानंको वक्षो यस्यासौ 'लक्ष्म्या अच्च' इति पामादिषु पाठात् मत्वर्थे नप्रत्ययः । स देवः वो मुदेऽस्तु । अखंडरूप इत्यनेन विकृतत्वं नारायणपरत्वे अमादिरित्यनेन आदिवर्णत्यागो व्यज्यते । तेन राजचिह्नः । भवेन शिवेन अर्चितांघ्रिः ज्यया मौर्व्या

कृतांकः दशाननांतः, लक्ष्मणः सौमित्रिरंकः साहचर्यरूपं लक्षणं यस्येति वर्णोद्वापे रामपरत्वम्, उभयोर्वर्णनीयत्वेन प्रकृतगोचरश्लेषः। यथा वा—

**आमूर्च्छदूर्जभटममूलमहो महागोमूढं रघुप्रवरसाध्वसमूकराजि।**
**दूनांतरं विगतभीषणकं च सैन्यं शत्रोरदूषणममुकगुणं पुनस्ते॥**

व्या— आमूर्च्छन्तः ऊर्जा बलवन्तः भटा यस्मिन् तत्, अमूलमाधाररहितं अवलंबनहीनं महागसा मूढं साध्वसेन भयेन मूकराजि निश्शब्दगजरथादिपंक्ति, दूनांतरं परितप्तहृदयम्। विगतभीषणकं अपगतभयंकरभटम्, हे रघुप्रवर! तव शत्रोस्सैन्यं भवति। त्वत्सैन्यं तु अदूषणं उक्तदोषरहितमित्यनेन दूशब्दषणशब्दाभ्यां रहितमित्यर्थो लभ्यते। तेन नांतरं निरंतरं; विगतभीकमिति अमुकगुणं अमंदवीर्यादिगुणयुक्तमित्यनेन मूशब्दरहितविशेषणमिति लभ्यते। तेन अर्च्छद्भटं आगच्छद्वलवद्भटं अमूलमित्यत्र अलंमाहगोमूढमित्यत्र महागोढं महागाः महापर्वताः ऊढाः येन तत् पर्वतानां प्रहरणार्थत्वात् निष्ठायाः परनिपातः साध्वसमूकराजि इत्यत्र साध्वसकराजि भयंकररणमिति स्वपरसैन्ययोर्वर्णनीयत्वेन प्रस्तुतगोचर एषां च श्लेषः॥

उभयगोचरो यथा—

**रसिताब्धिः पदाभाभृद्वारिजासीविषोदितः।**
**रामचन्द्र इवाभाति किन्तूष्मादिगुणोज्ज्वलः॥**

व्या— चन्द्रपक्षे शब्दायितसमुद्रः पदस्य चिह्नस्य भाभृत् वारिजानि अस्यतीति वारिजासि विषाज्जलादुदितः किन्तु ऊष्मादिभिः प्रतापादिभिः गुणैरुज्ज्वलो राम इति व्यतिरेकालंकारेण शषसहा ऊष्माण इति क्रमात् शकारादिवर्णादिकैर्गुणैः विशषणैरुज्ज्वलः इत्यर्थलाभात्। रसिताब्धिः इत्यत्र शरसिताब्धिः शरबद्धसमुद्रः पदाभाभृदित्यत्र षष् इति षकारद्वयमादिः तत्र द्वितीयस्य पदसंज्ञानिमित्तो जशादेशः। तेन षट्पदाभाभृत्। वारिजासीत्यत्र सकारप्रक्षेपः। तेन सवारीन् यज्ञविघ्नकरान् जसयति हिनस्तीति सवारिजासी। विषोदित इत्यत्र हकारप्रक्षेपः हविषोदितः पायसेनोदितः इति भवति॥ अस्मिन्नुदाहरणे वर्णावापः। पूर्वोदाहरणयोस्तदुद्वापः॥

अथ लिंगश्लेषमुदाहरति—

धीर्दयाशालिनी धीर नेत्रे च विजयींद्र ते।

अत्र दयाशालिनी इति स्त्रीनपुंसकयोः प्रथमैकवचनद्विवचनांतयोरेकोक्तिः। यथा वा—

विमलकमलभागभ्राजनप्रौढधाम्नी बहुलसदवतारोद्भासिनी भूतये नः।
श्रुतिपथपरिरंभप्रेयसी मूर्तिरग्न्या रजनिचररिपोस्तां नेत्रपंकेरुहे वा॥

व्या— अत्र रामचन्द्रस्य मूर्तेः नेत्रयोश्च स्त्रीनपुंसकयोः श्लेषः। मूर्तिपक्षे विमलकमलभाजो निर्मलजलभाजोऽभ्रस्य असने क्षेपणे प्रौढं धाम यस्याः सा। 'अन उपधालोपिनोऽन्यतरस्यामि'ति ङीप् प्रत्ययः। बहुलेन पूर्णेन सता अवतारेण उद्भासिनी श्रुतिपथस्य वेदमार्गस्य परिरम्भे प्रेयसी वेदप्रतिपाद्या इत्यर्थः। नः भूतये स्तात् भूयात्। नेत्रपक्षे तु कमलभामस्य पद्मदलस्य भ्राजनात् प्रौढं धाम ययोस्ते 'विभाषा ङिश्यों' इति अनोऽकारस्य लोपः पाक्षिकः। सतः अवतीति सदवा तारा कनीनीका बहुला श्यामा च सा सदवतारा च तया उद्भासिनी श्रुतिपथस्य कर्णमार्गस्य परिरम्भे प्रेयसी कर्णान्तविश्रान्ते इत्यर्थः। भूतये स्तां भूयास्ताम्। स्त्रीपुंसयोर्यथा—

जितासुराली भृतदेवपाली सचापकेली धृतधामवीची।
हरेः प्रियाजी हतपापराजी बाहूतनुर्वा दुरितं धुनीताम्॥

व्या— अत्र तनुपक्षे आली-पाली-केली-वीच्याजी-राजीशब्दाः ईकारान्ताः बाहुपरत्वे त्विकारान्ताः। पुंनपुंसकयोर्यथा—

श्रीवत्सभागुज्ज्वलकौस्तुभस्त्रक्सौत्रामणग्रावसमुल्लसद्भाः।
स्वानंदलक्ष्मीघनतां दधद्वो मुदे मुकुंदस्तदुरश्च भूयात्॥

व्या— शोभनः आनन्दो यस्याः स्वानन्दा तया लक्ष्म्या रमया घनतां दधत् उरः अन्यत्र स्वया आनन्दलक्ष्म्या आनन्दसम्पदा। एवं त्रिविधोऽपि लिंगश्लेषः।

अथ भाषाश्लेषमुदाहरति—

सोतुं विदीसंदोहोसिमहकेरमणेमहम्।
ससीतो येऽवविमलो जयि राया दया सह॥

व्या— संस्कृते पदानि— सोतुं विदीसंदेहः अयि महके रमणे महं ससीतः अये अव विमलः अजः इराया ॥ अजः जननरहितः वित् ज्ञानं ई लक्ष्मीः तयोः संदोहः निधिस्त्वं रमणे रमयितरि महके पूजके महमुत्सवं सोतुं जनयितुं असि भवसि ॥ इराया भूमेः अयाय शुभविधये (अये शुभविधौ) दयासहत्वं ससीतः सीतया सहितः विमलः तस्मादव ॥

प्रकृते पदानि— सोतुं वि दीसंदो होसि महके रमणे महम् । ससीतोये व विमलो जयिरायदयासह ॥ छाया—सत्वमपि दृश्यमानो भवसि । मदीये मनसि महान् शशी तोय इव विमलो यतिराजदयासख । दया सह खस्य 'खघथधफभाम्' इत्यनादेर्हत्वम् । हे यतिराज ! हे विजयीन्द्र ! 'आदेर्ज' इति यकारस्य जत्वम् । मतिशब्दे तकारस्य 'प्रायो लुक् कगचजतदपयवाम्' इति लोपः । एवमंत्यजकारस्यापि ज इत्यत्र संधिस्त्वपदइति न संधिः । अंत्यजकारात्परस्याकारस्य यश्रुतिर इति यत्नेन श्रवणम् । महं महान् तु संखिणभवजं मण महंत इति व्यंजनादेशाभावपक्षे मत्वम् । सत्वं स इत्यत्र सोर्डो इत्योकारो डित् । त्वम् इत्यस्य युष्मत्सुनातु वंतु मंतु तुहे इति तुमादेशः । प्रसिद्धः त्वमपि श्रीहरिरिव त्वमपीत्यपिशब्दार्थः । तोये जले प्रायो ग्रहणात् यकारस्य लुगभावः । विमलः ससी शशीव, 'शोः सल्' इति नित्यं सत्वम् । शुरिति शषसानां संज्ञा शषसाश्शुरिति संज्ञाविधानात् । मिवपिवविविविभवं इवार्थ इति इवार्थे वशब्दः महके रमणे मदीयमनसि गमशब्दस्य 'महमं झडंसे' इति महादेशः । ततः के इदमर्थे इति तस्येदमित्यर्थे केरप्रत्ययः । अंत्यहलोश्रदुदीत्यंतलोपः । न इति णत्वम् । ङेर्ड इत्यकारो डित् । दीसंदो दृश्यमानः । दीसल् दृशेः इति कर्मणि नित्यं ङौ सादेशः । शतृशानचोरितीन्तादेशः तत्र दस्तस्य शौरसेन्याम् इत्यधिकारे अध क्वचिदिति तस्य (ददः) तः होसि भवसि । हो भुवभवालवस्त्विति भुवो हो इत्यादेशः । संस्कृते तु रामपरत्वम् । प्राकृते तु प्रकृतपरत्वम् । यथा वा—

**सच्छन्दं परमे दुराहववरे सन्तं सुहन्तारिसे**
**शंखेजं सकले शमेह इलया मापं छलाहंकणे ।**
**लोकानापनतानकोपकतया सालोपलं चोपती-**
**ताहिंसा रुजि वीरहंस इतये ते हूति मंतो रणि ॥**

संस्कृतपदानि— सच्छन्दं परमे दुराहववरे सन्तं सुहन्ता अरिसे शं खे अजः शकले शमेहः इलया मापः चलाहंकणे । लोकान् आपनता अकोपकतया

आसालोपलं । चोपति इताहिंसाः रुजि वीरहंसे इहये अन्ते हूतिमन्तः रणि ॥ अरीनस्यतीति अरिसः शत्रुनाशकः तस्मिन् । परमे दुराहववरे शत्रुसान्द्रयुद्धश्रेष्ठे सच्छन्दं साभिलाषं सन्तं प्रशस्तं सुहन्ता, युद्धार्थिनं महावीरमेव रिपुं हन्ता "तृन्" प्रत्ययः । चलाहंकरणे चंचलाहंकारलेशे खे इन्द्रिये शकले विकले सति शं सुखं यथा तथा शमेहः शान्तिमीहमानः इलया भूम्या सहितः मापः लक्ष्मीपतिः अजः आसालोपलं अभिविधावाङोऽव्ययीभावः आसमन्तादपमतान् लोकान् अकोपकतया अपराधसहनतया चोपति व्याप्रोतीत्यर्थः । "चुप मन्दायां गतौ" इहास्मिन् वीरहंसे वीरश्रेष्ठे, यद्वा वीरश्चासौ हंसो विष्णुस्तस्मिन् "हंसोऽर्के विहगे विष्णौ जीवे श्वेतर्षभे स्मरे । निस्सपत्ननृपे भिक्षौ हीनपत्रगसिंहयोः" इंति शब्दरत्नाकरे । अस्मिन् विषये— ये जनाः रुजि रोगे अन्ते अवसाने रणि सशब्दे यथा तथा हूतिमन्तः विष्णो ! हरे ! माधवेत्यादि कीर्तनवन्तस्ते इताहिंसा अप्राप्तपीडा इत्यर्थः ॥

प्राकृते छाया—

स्वच्छन्दं प्रमतां राघवरे स्वान्तं सुखं तादृसां यस्य करे समेधते रयान् मापत्सरस्यां कणे लोकानां प्रणतानां गोपकतया सारः परं यः पतिः तावत्सार एव वीराणां सदा भयेन तादृशः तथा रणे ।

तादृशे राघववरे स्वान्तं स्वच्छन्दं सुखं प्रमताम् । तादृश इत्यत्र शेः कञ् सक्विनि इति ऋशब्दस्य रित्वं शस्य षोः ससि इति सत्वं राघव इत्यत्र घस्य खघ इत्यदिना हत्वम्, स्वान्तमित्यत्र स्वच्छन्दमित्यत्र च यवराधश्च इति वकारलोपः । स्तौ ह इति ह्रस्वश्च । सुखमित्यत्र खस्य हत्वं पूर्ववत् । प्रमतामित्यत्र प्रशब्दे यवरामधश्च इति रेफलोपः लोरो लिङो एकस्मिन् प्रथमादेः विध्यादिषु दुसुं इति प्रथमैकवचनं दुप्रत्ययः । दस्तस्य शौरसेन्यामखावचोस्तोः इति दत्वविधानाल्लोपाभावः । वा लड्वोट् शतृषु इन्येत्वं सांख्ये युद्धसंबंधिन्यंकणे स्यात् । पत्सरस्य पादचारिणो यस्य रामस्य करे मा लक्ष्मीः समेते । सांख्य इत्यत्र मागध्यां शौरसेनीवदित्यधिकारे स्त्रो श्लाविति सस्य शः । ह्रस्वः पूर्ववत् । मनयामिति यस्य लोपः । खस्य हत्वं तु न भवति । अस्तोरखोरच इति संयुक्तस्य निषेधात् । यस्येत्यत्र त्यादेर्ज इति यस्य जत्वम् । ङसो स्त्रियां सर् इति सर् रितो द्वित्वल् इति द्वित्वम् । शत्वं प्राग्वत् । रेफस्य लत्वं पूर्ववत् । शमेहइ समेधते उक्ते शत्वहत्वे । लटस्तप्ताविजेजिति इच् प्रत्ययः ।

भायारयात् लत्वमुक्तम् । ङसे श्लुगिति पंचम्येकवचनस्य लोपः । शिति दीर्घ इति दीर्घः । पश्चलाहापत्सरस्य त्वाङ्गाहो गङ्स इत्याहादेशौ डित् । रोलस्तु चूलिका पैशाच्याम् इति रस्य लः । थ्यश्च त्सप् पामनिश्चल इति छस्य छादेशः पश्चलाः अंकण इत्यत्र लोप इत्यत्राचो लोपः । लोकानां प्रणतानां गोपकदयासारं परं यः पतिः प्रणतानां गोपको रक्षको दयासारः कृपाप्रवाहो यस्यासौ । जो यः राघवः परं लोकानां पतिः । लोकानामित्यत्र ककारादीनां पैशाच्यां न प्रायो लुगादि छल् षट् छं यंत सूत्रे क्तमिति निषेधाधालुगभावः । णशाम इति षष्ठीबहुवचनस्य णशिशितिदीर्घः । नो नणोः पैशाच्यामिति णत्वम् । अचोऽचाम् इति आत्वम् । गोपकेत्यत्र गज उददेत्यादिना कत्वम् । य इत्यत्रादेर्ज इति जत्वे कृते चत्वं च चूलिकापैशाच्यां दयेत्यत्रत्वलतदोरितिनित्यं तकारादेशः । पतीत्यत्र श्लुगणपिसोरिति स्त्रिपुंसकयोः सुलोपः शित्वाद्दीर्घः । रणे ततो राघवात् वीराणां तावत् सदा भयेन सन्ततत्रासेन तथा तादृशः सार एव बलमेवेत्यर्थः । अपभ्रंशे ताहिं तावत् यावत्तावत्य मम हिमावादेरिति तावच्छब्दस्य वादेरवयवस्य हिमादेशः । सारु सारः स्वम्यत उत् इत्युदित्वम् । सुसत्योरिति प्रथमाद्वितीययोर्लुक् । एवं जीत्येवार्थे जिशब्दः । वीरहं वीराणां आमो हम् इति हंभावः । सइ सदा इत्तु सदादाविति द्वितीयस्याच इत्वम् । हयें भयेन भस्य हत्वमुक्तम् । टि इत्येत्वम् । टोणानुस्वारौ इति तृतीयैकवचनस्य अनुस्वारादेशः । तेहु तादृक् दादेर्डत्से यादृक् तादृक् कीदृशीदृशामिति तादृक्शब्दाकारादेः दे इह इत्यादेशः इत्वम् । ङिहौ सुषि इति पाक्षिको दीर्घः । सुलोप उक्तः । तिमं तथा । कथं तथा यथा डित । डिम डेमास्थादेः इति थाडेरिम इत्यादेशो डित् । स्वरेभ्यो वक्रादौ इति बिन्दुविधायकसूत्रे त्रिविक्रमदेवेन क्वचिच्छन्दःपूरणेऽपि बिन्दुरिष्यते । देवानागसु वक्रमित्यत्र देवणा असुबन्तमित्युक्तत्वात् छन्दःपूरणार्थमत्र बिन्दुः कृतः । तो ततः । ततस्तदानो इति ततःशब्दस्य तो भावः । रणि रणो ङिनेच्च इति इत्वम् । अत्र प्रथमपादे प्राकृतशौरसेन्यौ । द्वितीयपादे मागधी । तृतीयपादे चूलिकापैशाच्यौ । चतुर्थपादे अपभ्रंशः । सर्वत्र संस्कृतं योज्यम् ॥

**अथ विभक्तिश्लेषमुदाहरति—**

**सेवायोग्ये मम मते रमस्व विजयीश्वरे ।**

व्या— हे मते ! मम मते रमस्व इत्यत्र मते इति संबुद्धिरूप्तम्योः श्लेषः । अयं च श्लेषस्त्रिविधः । सुपोस्तिङोस्सुप्तिङोश्तेति । तत्र सुपोर्यथा—

**मनोहरे त्वत्पदपंकजे मम स्फुरच्चरासे तव पाणिपल्लवे ।**
**सदा सहर्षे निरतं विलोचने न राम गाते न भृशं प्रकृष्टताम् ।।**

राममनोहरे मनोज्ञे स्फुरन्तः शराः असिश्च यस्य तत्संबुद्धिः । सदा सहर्षे तव पादपंकजे मनः प्रकृष्टतामाकृष्टतां न न गाते गच्छत्येव इत्यर्थः । हे राम मनोहरे मनोज्ञे तव उभे पादपंकजे । रामपरत्वे मनोहरे रम्ये त्वत्पदपङ्कजे उभे स्फुरन् शरासो धनुर्ययोस्ते पाणिपल्लवे दासानां हर्षः तत्सहिते तत्कारिणि इत्यर्थः । विलोचने द्वे प्रकृष्टतामुत्कृष्टतां न न गाते गाङ्[१] गतौ द्विवचनम् । अत्र हरौ प्रकृते संबुद्धिः । सप्तम्येकवचनयोः रामे प्रकृतयोः प्रथमाद्विवचनस्य च सकृदुच्चारणविषयत्वाद्विभक्त्योः सुपोः श्लेषः ।।

तिङोर्यथा—

**तमोविभिन्तां तनुतां धियं वो वाचः पुनीतामपि विस्तृणीताम् ।**
**अघं लुनीतामिहतं धुनीतां तल्पं हरेस्ते अपि शंखचक्रे ।।**

व्या— हरेः तल्पं शय्या शेषः भार्या लक्ष्मिश्च 'तल्पं शय्याट्टदारेषु' इति वचनात् । अत्र आत्मनेपदैकवचनपरस्मैपदद्विवचनयोः श्लेषः । तत्र शेषपरत्वे लक्ष्मीपरत्वे च आत्मनेपदमेकवचनम् । शङ्खचक्रपरत्वे परस्मैपदि द्विवचनम् । सुप्तिङोर्यथा—

**कलालीढे कामं विशदरुचिदुग्धे स्फुटमहो**
**हिमागे विद्विष्टे सुरसरसि दत्ते व्यवधिकम् ।**
**अनन्ते संदिग्धे सकलहरिदन्तेऽपि च समा ।**
**हते भाति प्रौढिं दिवि भुवि च योगीन्द्रसुयशः ।।**

विशदरुचि धवलकान्ति व्यवधिकं अवधिरहितं योगीन्द्रस्य सुयशः कर्तृ कलाश्चन्द्रिकाः लीढे ग्रसते कामं दुग्धे पूरयति । हिमागे हिमगिरौ स्फुटमहः व्यक्ततेजः विद्विष्टे द्वेषं करोति । सुरसरसि व्यवधिकं व्यवधानं दत्ते ददाति । अनन्ते

१ भ्वादिः ९५० गाते गाते गाते ।

शेषे सन्दिग्धे अयमनन्तो न वेति सन्देहविषयत्वं तस्य करोतीत्यर्थः। सर्वदिगन्ते समाहते प्रसरति हन्तेराङ्पूर्वादकर्मकात् गत्यर्थात् आङो यमहनः इत्यात्मनेपदम्। तत्प्रौढं तत्स्फुटं भाति। अहो ! किं च विशदरुचि चन्द्रे कलालीढे स्वकलया लीढे ग्रस्ते सति दुग्धे क्षीरे ग्रस्ते हिमागे द्विष्टे द्वेषविषयीकृते सति सुरसरसि दत्ते अविशेषादमरैस्त्यक्ते सति अनन्ते सन्दिग्धे सति दिगन्ते समाहते व्याप्ते सति प्रौढं सद्भाति। अत्र लीढेत्यादीनां सप्तम्येकवचनानां तिङां च श्लेषः इत्युभयश्लेषः ॥

**अथ प्रकृतिश्लेषमुदाहरति—**

**जयीन्द्र भवतो दानं प्रत्यर्थिषु तथार्थिषु**

व्या— अक्ष दोदाङोर्ल्युडन्तयोः श्लेषः। यथा वा—

**मौर्वी चावनिमारुरुक्षति रिपूनस्त्रं च सीतापतेः**
**ज्याकर्णं प्रविविक्षति प्रतिभटस्वान्ताच्च धैर्यं क्षणात्।**
**बाणानेष रुषा मुमुक्षति रणे भीत्या च रक्षश्चमू-**
**र्मेदांसि प्रविलापयत्यसुहृदां बाणैरदस्त्रैरपि ॥**

अत्र रुहि रुज्योः विशि विज्योः मुचि मह्योः ली विलप्योः ण्यन्तयोः श्लेषः ॥ प्रातिपदिकस्य यथा—

**सुरासुराणां वनितासु वैधवीं द्विषां स्ववंशस्य च कैतवीं दशाम्।**
**प्रकाशयन् प्राभवधाम राघवो जगत्ततः सौरमहो दधद्बभौ ॥**

अत्र विधुविधवाशब्दयोः प्रभुप्रभवशब्दयोः सूरसूरिसुरशब्दानां च तद्धितश्लेषः ॥

**शारीयति समं रामो राक्षसानां च वाहिनी।**
**तद्बाणराक्षसव्रात रणे रक्तसुरीयति ॥**

शरः प्रहरणमस्यां क्रीडायां तामात्मन इच्छति रामः। शारी पक्षिविशेषः तद्वदाचरति राक्षसवाहिनी। उत्तरार्धे रक्तमेव सुरा मद्यं रक्ताः सुर्यः सुरस्त्रियः ता आत्मनः इच्छति इति क्रमादर्थः ॥

**अथ प्रत्ययश्लेषमुदाहरति—**

**भवति श्रीजयीन्द्रार्य प्रावण्यं पुण्यशालिनाम् ।**

व्या— भवति त्वयि भवतीति सुप्तिङ् प्रत्यययोः श्लेषः । यथा वा—

**बाणश्चेत् सहसा वहंत्यरिचमू मोदं तदा तापसाः**
**मद्बाहू तदुपप्लवं यदि हतः शोकोऽपि ताभ्यां दिवः ।**
**देवाश्चेदभिनन्दिता ननु मया स्यादेव सा मे तदा**
**युक्तप्रत्ययपूर्वमित्यमवदत्सीतासहायोऽनुजम् ॥**

सहसावहन्तीत्यत्र अवहन्ती वहन्तीत्युभयसंग्रहः तेन तापसा मोदं वहन्तीत्यन्वयः । अत्र हनिवहिप्रकृतिकयोः एकवचनबहुवचनप्रत्यययोः श्लेषः । हंतः इति क्तसोः श्लेषः । अभिनन्दिता नन्वित्यत्र बहुवचनान्तक्तप्रत्ययः एकवचनान्तः तल्प्रत्ययः । तयोः श्लेषः । अयं युक्तप्रत्ययपूर्वमित्यनेन व्यंजितः । तत्र हि अनुरूपशपथपूर्वकं श्लिषटशब्दपूर्वमितिचार्थः । **अथ वचनश्लेषमुदाहरति ।**

**जयीन्द्रापरुषो वाचां प्रवाहो मतयश्च ते ।**

व्या— वाचां प्रवाहो धाटी अपरुषः पारुष्यरहितः मतयश्च अपरुषः अपगतरोषाः । अत्र एकवचनबहुवचनयोः श्लेषः । यथा वा—

**सद्भावोत्तमनाः सतामसदृशो भावार्जवासाधवः**
**सत्संवित्तरवः सपापकलयो भूमावसीदन्महाः ।**
**दूरागाः सततं कृतासुरभयो राजद्धनुर्ज्यानयो**
**रामस्सातिमिदं द्विषश्च दधते चित्रामभीतेर्भुवि ॥**

व्या— अत्रैकवचनबहुवचनयोः श्लेषः । एकवचने तावत् सतां विषये सद्भावेन उत्तम् आर्द्रं मनो यस्यासौ असदृशः निरुपमः भासत इति भाः भ्राजभास इत्यादिना कर्तरि क्विप् । वार्जवासा अम्बुजवासा लक्ष्मीः तस्याः धवः पतिः सद्भिः संवित्तः ज्ञातः (रवः) रामादिशब्दो यस्यासौ । पापकानां पापिनां लयो नाशस्तेन सहितः भूमौ असीदत् अनश्यत् महः तेजः उत्सवो वा यस्य सः । दूरं आगो दुरितं यस्यासौ । सततं कृतं असुराणां भयं येन सः । राजन् धनुर्ज्यर्योः चापगुणयोः नयः शिक्षा यस्य सः । रामः अभिहितेश्चित्रां अद्भुतां साति दानं दधते धारयति दध—धारणे । बहुवचने तु रामस्य अरीश्वराः शत्रुभूपाः अभिहितेः साति अवसानं

भयं दधते। धाञ्- धातोर्लड्बहुवचनम्। कीदृशाः सद्भावे उद्गतं तमनं ग्लानिः येषां ते तामसी दृक् ज्ञानं तत्सहिताः भावस्य आर्जवे ऋजुत्वे असाधवः अपवादिनः इत्यर्थः। सत्संविदि प्रशस्तयुद्धे तरवः स्तब्धाः इति भावः। चापेन कुत्सितेन कलिना कलहेन सहिताः भूम्ना प्राचुर्येण अवसीदन्महः उत्सवो येषां ते दुर्गतो रागोऽभिलाषो येषां ते सततं कृता असुरभिः अकीर्तिः येषां ते। 'सुरभिर्गवि कीर्तौ च स्त्री वसन्ते च पुंस्ययम्। त्रिषु रम्ये सुगन्धौ च' इति विश्वः। राजन्ती धनुषां ज्यानिः जीर्णता येषां ते तथोक्ताः। ननु केवलप्रकृतगोचरः केवलाप्रकृतगोचरश्च श्लेषद्वयं तुल्ययोगितायाः विषयः उभयगोचरश्लेषो दीपकस्य विषयः यदाह सूत्रकारः— 'औपम्यस्य गम्यत्वे पदार्थगतत्वेन प्रस्तुतानाम् अप्रस्तुतानां वा समानधर्माभिसम्बन्धे दीपक' मिति च। तस्मान्नास्य श्लेषस्य विषयः संभवति। न च—

**आकृष्यादाय मन्दग्रहमलकचयं वक्त्रमासज्य वक्त्रे**
**कण्ठे लग्नः स्वकण्ठः प्रसरति कुचयोर्दत्तगाढांगसङ्गः।**
**बद्धासक्तिर्नितम्बे पतति चरणयोर्यस्य तादृक्प्रियो मे**
**बाले लज्जा निरस्ता नहि नहि सरले चोलकः किं न तादृक्॥**

इत्यत्र अलकाकर्षणादीनां विशेषणानां नायकपरत्वेन प्रतीतिः। अतो निर्लज्जाऽसि इति सख्योक्ते नहि नहि चोलकः कोऽन्यस्तादृगिति कूर्पासपरतया प्रतीतिः। नात्र तुल्ययोगिता नापि दीपकं समानधर्मस्य युगपदप्रतीतेः। विविक्तोऽयं श्लेषस्य विषयः इति वाच्यम्। साधु दृश्यताम् अपह्नुतिरत्र जागर्ति। न चात्र सादृश्यार्थप्रवृत्त्यभावात् नहि नहीति अपह्नवायैव अपह्नुत्यलंकारस्य नायं विषयः इति वाच्यम् उभयथाप्यपह्नुतेः सम्भवात्— तदुक्तम्—

**सादृश्यव्यक्तये यत्रापह्नवो साप्यपह्नुतिः।**
**अपह्नवाय सादृश्यं यत्र चैषाप्यपह्नुतिः॥ इति**

सत्यं अत एव अयं निरवकाशत्वात् अलंकारान्तर बाधकोऽलंकारान्तर-प्रतिभोत्पत्तिहेतुः श्लेषः प्रतिष्ठां लभते।

ननु कथं श्लेषस्य शब्दालंकारत्वम्।

**यः पूतनामारणलब्धवर्णः काकोदरो येन विनीतदर्पः ।**
**यशोदयालंकृतमूर्तिरव्यान्नाथो यदूनामथवा रघूणाम् ॥**

उदात्तादि प्रयत्नभेदेन शब्दभेदात् जतुकाष्ठन्यायेन शब्दयोः श्लिष्टत्वेऽपि अर्थद्वयप्रतीतेः अनिवार्यत्वात् । एकतालावलम्बिफलद्वयन्यायेन अर्थश्लेषो युक्तः । तथाहि— प्रत्यर्थं शब्दः इति मते अर्थभेदेऽपि न शब्दभेदः इति मते च लोकश्लोकादिशब्दानां जनभुवनकीर्तिपद्याद्यनेकार्थप्रतिपत्त्यर्थं नानार्थकोशः पठ्यते न च—

**स्वयं च पल्लवा ताम्रा भास्वत्करविराजिता ।**
**प्रभातसंध्येववास्वापफललुब्धेहिताप्रद ।**

इत्यत्र भास्वत्करशब्देन राजमानपाणिसूर्यकिरणरूपावर्थौ पदान्तरप्रयोगे सति न प्रतीयेते । ततश्चमत्कारित्वात् शब्दश्लेषो युक्त इति वाच्यम् । योऽलंकारो यदाश्रयः तद्व्यपदेशं लभते । शब्दानाम् अर्थैकायत्ततया प्रधानभूतार्थव्यपदेश एव अलंकाराणां युक्तः इति चेत् अहो एवमप्रलपनिरस्तुते शृणु तावद्यथा— श्रुतिकटुत्वच्युतसंस्कारत्वादिदोषाणां शब्दान्वयव्यतिरेकानुविधानात् शाब्दत्वं यथा च— व्यर्थत्वास्फुटत्वादिदोषाणाम् अर्थान्वयव्यतिरेकानुविधानात् आर्थत्वं तथा अलंकाराणामपि लोके च कुण्डलहारादीनां कर्णकण्ठाद्याश्रयत्वाद्यथा तत्तद्व्यपदेशः । अन्यथा अनुप्रासादीनां रसाद्यनुगुणविन्यासादिरूपाणामपि शाब्दत्वम् उत्सीदेत् । अपि च वैचित्र्यमेव हि कवेः प्रतिभासंरंभगोचरः तदेव अलंकारः । स चात्र शब्द एव विश्राम्यति । न च अभंगश्लेषस्यापि शब्दाश्रितत्वे क्वचिदपि नार्थश्लेषः स्यादिति वाच्यम् ।

**स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।**
**अहो सुसदृशी वृत्तिः तुलाकोटेः खलस्य च ॥**

इत्यादौ स्वल्पादिपदान्तरपरिवृत्तिसहिष्णुतया अर्थश्लेषावस्थानात् । अत्रायं निष्कर्षः यत्र श्लेषस्य अलंकारान्तराणां च समावेशः तत्र यस्य प्राबल्यं सोऽलंकारः प्रधानम्, तस्य अलंकारान्तरमङ्गम् । यथा 'हंसीव कृष्ण ते कीर्तिः स्वर्गगामवगाहते' इत्यत्र उपमा प्रधानं तस्य श्लेषोऽङ्गम् । 'अब्जेन त्वन्मुखं तुल्यं हरिणाहितसक्तिना' इति केवलाप्रकृतश्लेषोदाहरणे श्लेषः प्रधानम् उपमा तस्याङ्गम् ।

'अप्रतियातनभोगे'त्यादौ केवलाप्रकृतश्लेषस्य विविक्तविषयत्वं द्रष्टव्यम्। एवं विरोधाभासादौ तत्र तत्र द्रष्टव्यम्। अथ कथं सावकाशस्य अलंकारान्तरस्य निरवकाशस्य श्लेषस्य च प्राबल्यदौर्बल्यविचारसंभवः इति चेत्—

**देव त्वमेव पातालमाशानां त्वं निबंधनम्।**
**त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः॥**

श्लेषस्य विविक्तविषयत्वेन सावकाशत्वात् अलंकारान्तरप्रतिभोत्पत्तिहेतुरयं श्लेषः प्रतितिष्ठति इत्युक्तमिति चेत्— 'यः पूतनामारणलब्धवर्णः' इत्यादौ निरवकाशत्वेन तुल्ययोगितापेक्षया प्राबल्यात्। एवं च 'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव' इत्यादौ उपमा श्लेषं बाधते।

**अनुरागवती संध्या दिवसस्तत्पुरस्सरः।**
**अहो दैवगतिश्चित्रा तथापि न समागमः॥**

इत्यादौ अप्रकृतवाचकविशेष्यकपदाभावात् समासोक्तिः बाधते 'नाल्पः कविरिव स्वच्छः श्लोको देव महान् भवान्।' इत्यादौ व्यतिरेकस्य श्लेषोऽङ्गं 'सद्वंशमौक्तिकमणे', 'विद्वन्मानससारस' इत्यादौ रूपं मौक्तिकमणेः सद्वंशहेतुकत्वात् रूपकस्य श्लेषोंऽगं विद्वन्मानससारसेत्यत्र वर्णनीयस्य सारसत्वारोपरूपं रूपकम्। विदुषां हृदयस्य मानसशब्देन श्लेषम् उत्थाप्य तदंशे रूपकं विवर्तयतीति एकदेशविवर्तिरूपकं श्लेषं बाधते। पूर्वत्र तु वंशशब्देन युगपत्प्रतीतयोः वेणुकुलयोः वर्णनीये मौक्तिकसादृश्येन तद्भावारोपहेतुत्वात् रूपकस्य प्राधान्यं श्लेषस्य तदंगत्वम्। विद्वन्मानसेत्यादै तु नैवं, अपि तु रूपकांशे विवतप्रिक्षणेन श्लेषस्य उत्थापितत्वात् बाध्यत्वम्। तदुक्तं चक्रवर्तिना— 'रूपकं पूर्वसंसिद्धं श्लेषमुत्थापयेद्यदि। तदा रूपकमेव स्यादन्यथा श्लेष इष्यते॥' इति तथा—

**आदाय चापमचलं कृत्वाहीनं गुणविषमदृष्टिः।**
**यश्चित्रमच्युतशरो लक्ष्यमभांक्षीन्नमस्तस्मै॥**

इत्यत्र विरोधाभासः श्लेषम् अवभासयन् प्राधान्यमवलम्बते। ततश्च यत्र प्राबल्यदौर्बल्ये न स्तः तत्र संकरः इति सर्वं विशदम्।

अर्थालंकारनिरूपणात्पूर्वं सूचीकटाहन्यायेन **उभयचित्रं** निरूपयति—
**उभयचित्रं यथा—**

**अत्याखण्डलधन्वखण्डपरशोश्चाण्डंदुराखण्डदो-**
**र्दण्डाहिण्डनलीलया रघुपतेः कोदण्डमाखण्डयत् ।**
**पुण्ड्रं गण्डकरण्डमण्डनमदप्रोद्दण्डकण्डूचल-**
**च्छुण्डादण्डभरप्रचण्ड इव वेतण्डप्रकाण्डाग्रणीः ॥**

अत्रोपमानुप्रासयोः वर्णनादुभयचित्रम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यपदवाक्यप्रमाणपारावारपारीण
सर्वतन्त्रस्वतन्त्र श्रीमद्वैष्णवसिद्धान्तप्रतिष्ठापनधुरीण
श्रीमद्विजयीन्द्रतीर्थश्रीपादशिष्य श्रीमत्सुधीन्द्रतीर्थविरचित-
अलंकारमंजरीव्याख्यायां श्रीमत्सुमतीन्द्रतीर्थकृतायां
मधुधाराख्यायां श्लेषप्रकरणं समाप्तम् ॥

॥ इति शब्दालङ्कारपेटिका ॥

॥ श्रीमन्मूलरामो विजयते ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यो नमः ॥

श्रीमत्सुधीन्द्रतीर्थश्रीपादविरचिता

# अलङ्कारमञ्जरी

## ॥ अर्थालङ्कारपेटिका ॥

### अर्थालङ्कारनामसंग्रहश्लोकाः

अर्थालङ्कारनामान्युपमिति परिणाहोपमेयोपमा भ्रा-
न्त्युल्लेखानन्वयापन्हवपरिकरदृष्टान्तसन्देहसंज्ञाः ।
स्मृत्युत्प्रेक्षाप्रतीपाधिकसमविषमा दीपकावृत्तिदीपा-
क्षेपश्लेषास्समासातिशय सहविना प्रौढगूढोक्तयश्च ॥ १ ॥

चित्राल्पैकावलीरूपकपरिकरणप्रस्तुताङ्कूरसार-
व्याख्यात[१] व्याजनिन्दास्तुतिललितविरुद्धास्समाधिर्विकल्पः ।
वक्रव्याजस्वभावातिविवृत सविशेषोक्तिलोकोक्तियुक्ति-
छेकोक्त्यप्रस्तुतासङ्गतिविधि परिवृत्त्युत्तरोदात्तमुद्राः ॥ २ ॥

पर्यायोक्तिविभावनानुगुणसूक्ष्मातद्गुणोन्मीलिता-
वज्ञाहेतुविशेषलेश[२] कलितप्रत्याद्यवस्तूपमाः ।
मालादीपककाव्यलिङ्गपरिसंख्योल्लासरत्नावली
पर्यायप्रतिषेधभाविक निरुक्त्यन्योन्य सम्भावनाः ॥ ३ ॥

मिथ्याद्य[३] व्यवसित्य[४] सङ्गतिविषादार्थान्तरन्यास का-
व्यार्थापत्तिनिदर्शहर्षणमनुज्ञातद्गुणासम्भवाः ।
सामान्यव्यतिरेकमीलितविकासप्रत्यनीका यथा-
संख्यं कारणदीपकस्रगुभयं तत्पूर्वरूपाभिधम् ॥ ४ ॥

---

१. पाः– तद्व्याज,
२. पाः– वलित, फलित,
३. पाः– द्याध्यव,
४. पाः– असङ्गम,

विशेषकसमुच्चयावथ च तुल्ययोगित्वमि-
त्यमूश्शतमलंक्रिया रसवदादयस्सप्त ताः ।
प्रमाणविधयाष्ट सङ्करभिदास्संसृष्टय-
श्चतस्र इति पञ्च[१]वत्परिमिताश्शतं विंशतिः ॥ ५ ॥

अर्थालङ्कारनामानि संगृहीतानि सन्मुदे ।
मञ्जर्यां दर्शितान्यत्र राजगोपालसूरिणा ॥

इति सर्वतन्त्रस्वतन्त्र श्रीमत्सुधीन्द्रयतिकविन्द्रविरचितालङ्कारमञ्जर्यां निरूपितार्थालङ्कारसंग्रहश्लोकाः श्रीमद्राघवेन्द्र-सुमतीन्द्रोभय-वंशवारिधिचन्द्र श्रीमत्सुज्ञानेन्द्रतीर्थश्रीचरणान्तेवसदग्रण्या तत्पूर्वाश्रमीय ज्येष्ठपुत्रेण राजा राजगोपालसूरिणा विरचिताः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

१. पाः– तत्परिमिता ॥

॥ श्रीवीन्द्रारूढश्रीमल्लक्ष्मीनारायणाय नमः ॥

श्रीमत्सुधीन्द्रतीर्थकविसार्वभौमविरचिता

## ॥ अलङ्कारमञ्जरी ॥

# ॥ अर्थालङ्कारपेटिका ॥

## अर्थालङ्काराः लक्षणोदाहरणाभ्यां प्रदर्श्यन्ते

स्व[1] लक्षणोदाहरणैरर्थालङ्कारपद्धतिः ।
प्रदर्शयिष्यते तत्र प्राधान्यादुपमाग्रतः[2] ॥

१. उपमालङ्कारः

उपमा साम्यनिष्पत्तिरुभयोरनुरूपयोः ।
पूर्णावर्ण्योपमाधर्मे वादिनां प्रतिपादने ।
विभाति विजयीन्द्रोऽयं कलाभिश्चन्द्रमा इव ॥
वादे धर्मस्योपमायास्तद्वाद्योर्वादिवर्णयोः ।
उपमाधर्मयोर्वादि धर्मयोस्तत् त्रयस्य च ॥
लोपाल्लुप्ताष्टधा सेयं लोके सूरिभिरीरिता ।
ज्योत्स्नाच्छायाब्धिनिभालम्बा सदृग्या[3] सा जयीन्द्र ते ।
धत्तेऽर्थिमोदमुन्मेषैः कीर्तिश्चन्द्रचकोरकम् ।
अर्कीयन्निखिलानन्देऽग्निपतङ्गीयमानताम् ॥
द्विषां वज्रत्यहीशानख्यातोऽयमभिविक्रमः ॥

---

१. पा- संलक्षणोदाहरणैः, सल्लक्षणोदाहरणैः । २. पा- उपमादयः ।
३. पा- सदृक् व्याप्ता ।

२. अनन्वयालङ्कारः

अनन्वयो यदेकस्मिन्नुपमानोपमेयता ।
विभाति विजयीन्द्रोऽयं विजयीन्द्र इव श्रिया ॥

३. उपमेयोपमालङ्कारः

उपमेयोपमा साम्यं पर्यायेण द्वयोर्यदि ।
गीष्पतिर्विजयीन्द्रेण जयीन्द्रो गीष्पतेस्समः ॥

४. प्रतीपालङ्कारः

(१) प्रतीपमुपमानत्वमुपमेयस्य चेद्भवेत् ।
समः श्रीविजयीन्द्रेण सार्वभौमः फणाभृताम् ॥

(२) प्रतीपं वर्ण्यधिक्कारोऽन्योपमेयपरिग्रहात् ।
नाहंकुर्याः श्रीजयीन्द्र त्वादृगस्ते यदब्जभूः ॥

(३) प्रतीपमन्यन्यक्कारः प्रकृतार्थोपमेयतः ।
राधेयदानगाथा का विजयीन्द्रोऽपि तादृशः ॥

(४) प्रतीपमन्यसादृश्यानिष्पत्तिः प्रकृतेन चेत् ।
किं वदामो जयीन्द्राभः स्वर्द्रुरित्युच्यते बुधैः ॥

(५) प्रतीपमपि वैय्यर्थ्यमुपमानस्य कुत्रचित् ।
व्याकुर्वति जयीन्द्रेऽस्मिन् किं दर्वीकरधीमता ।
प्रतीपं पञ्चधा प्राहुरुपमेयोपमात्वतः ।
वर्णान्यन्यक्कृतेश्चोपमेयत्वोक्त्यन्यवर्णयोः ॥
वर्ण्येऽन्यसाम्यानिष्पत्तेरुपमा व्यर्थभावतः ।

५. स्मृत्यलङ्कारः

स्मृतिः स्मृतौ स्मराप्यद्रेर्धैर्यं दृष्ट्वा जयीन्द्र ते ।

६. भ्रान्त्यलङ्कारः

भ्रान्तिरन्यभ्रमे कीर्तौ चकोर्यश्चन्द्रिकाधियः ।

७. सन्देहालङ्कारः

सन्देहः संशये हस्तः स्वस्तरुः किं नु कामधुक् ॥

८. उल्लेखालङ्कारः

उल्लेखो बहुधेकेनानेकैर्वोल्लेखनं द्विधा ।
गिरिर्धृतौ गुरुर्वाचि जयीन्द्रो भासि भास्करः ॥
अर्थिप्रत्यर्थिशिष्याणां स्वर्द्रुः कालः फणीश्वरः ॥

९. रूपकालङ्कारः

रूपकं तद्विषयिणाऽभेदताद्रूप्ययोः क्रमात् ।
विषये रञ्जने षोढाऽधिकन्यूनसमत्वतः ॥
चन्द्रो जयीन्द्रो नित्यर्द्धिरनयोगतिरुत्कलः ।
तज्जोन्यः स्वद्रुमोऽनब्धिभवः सफलितार्थनः ॥

१०. परिणामालङ्कारः

परिणामो विषयिणः क्रियार्थ विषयात्मता ।
श्रीमज्जयीन्द्रकल्पद्रुर्व्याख्यां सूतेऽद्भुतं सदा ॥

११. अपह्नवालङ्कारः

(१) शुद्धापह्नुतिरेषान्यारोपार्थे धर्मनिह्नवे ।
नेयं जयीन्द्र मौनीन्द्र व्याख्या गर्जैव वार्मुचाम् ॥

(२) हेत्वपह्नुतिरेषैव कथ्यते युक्तिपूर्विका ।
वाण्यासक्तो यतो नायं जयीन्द्रः किन्तु पद्मभूः ॥

(३) भ्रान्तापह्नुतिरेषान्य भ्रान्तिर्यदि निवार्यते ।
व्याकुर्वन्नहिराजः किं नहि श्रीविजयीशिता ॥

(४) कैतवापह्नुतिर्व्याजादिपदै[1] रुक्तनिह्नवः ।
जयीन्द्रकीर्तिव्याजेन ज्योत्स्ना जागर्त्यहर्निशम् ॥

---

१. पा– पदोक्त्यार्थनिह्नवः ।

(५) पर्यस्तपूर्वारोपार्थोऽन्यत्रारोप्यार्थनिह्नवः ।
तस्मिन् रज्याम्यहं कीर्ते जयीन्द्रे किं न वेधसि ॥

१२. उत्प्रेक्षालङ्कारः

उत्प्रेक्षा स्याद्धेतुफलवस्तुसम्भावनात् त्रिधा ।
सिद्धासिद्धाश्रये पूर्वे परोक्तानुक्तसंश्रया ।

शुभ्राभ्रगङ्गया सङ्गाज्जगदल्पत्वचिन्तया ।
त्वामाश्रितर्द्धयेऽन्वेष्टुमरीन् दिग्व्यापिनी ध्रुवम् ।

तर्क्यमाणा शरज्ज्योत्स्ना धोरिणीति निरन्तरम् ।
जयीन्द्रकीर्तिर्ब्रह्माण्डप्रासादं लिम्पति ध्रुवम् ॥

१३. अतिशयोक्त्यलङ्कारः

रूपकातिशयोक्तिः सा वर्ण्यं यदि निगीर्यते ।
पुनीते भुवनं गङ्गा विजयीन्द्रास्य निर्गता ॥

अयोगयोगयोर्योगायोगौ चेत्सा तदंकिता ।
जयीन्द्रकीर्त्या धवले जगतीन्दुरलाञ्छनः ।

अत्यन्ताक्रमपूर्वा सा हेतोः पश्चात्सहत्वतः ।
श्रीजयीन्द्रदृशो वच्मि श्रीः प्रागित्यपरे सह ॥

चपलाद्या च सा कार्यसिद्धौ हेतुप्रसञ्जनात् ।
दास्यामीति जयीन्द्रोक्त्या दारिद्र्यं क्वापि लीयते ॥

१४. तुल्ययोगितालङ्कारः

तुल्ययोगित्वमन्येषां वर्णानामेकधर्मता ।
कीर्ते जयीन्द्रवाग्गुम्फे कियन्तौ शेषगीष्पती ।

वाङ्मनः कायवृत्तीनामैकरूप्यं जयीन्द्र ते ।
तथोत्कृष्टैः समत्वोक्तिर्गीष्पतिस्त्वमजो गुरुः ।

तुल्ययोगित्वमहितहितयोस्तुल्यवृत्तिता ।
श्रीजयीन्द्रदृशापूर्वविद्याप्तिः शत्रुशिष्ययोः ॥

१५. दीपकालङ्कारः

दीपकं धर्म एकश्चेत् प्रस्तुताप्रस्तुताश्रयः ।
विद्योतते जयीन्द्रोऽयं विद्यया द्युमणी रुचा ॥

१६. आवृत्तिदीपकालङ्कारः

आवृत्तिदीपकं तच्चेच्छब्दार्थोभयगं त्रिधा ।
जयीन्द्रो जयति स्फूर्त्या जयत्यस्य च वाग्झरी ॥
नौत्यजः स्तौत्यहिः श्रीशस्तुष्यत्याशा च तुष्यति ॥

१७. व्यतिरेकालङ्कारः

व्यतिरेको[१] विशेषोक्तिर्वाग्लौः (वि) जयीन्द्रस्त्वलाञ्छनः ॥

१८. दृष्टान्तालङ्कारः

दृष्टान्तो वाक्ययोर्बिम्ब प्रतिबिम्बतया वचः ।
जयीन्द्र एव वाग्धाटी कपर्दिनि वियद्धुनी[२] ॥

१९. प्रतिवस्तूपमालङ्कारः

प्रतिवस्तूपमा वस्तुप्रतिवस्तुत्वमेतयोः ।
जयीन्द्रांघ्रौ मनो हृष्यत्यलिर्माद्यति माधवे ॥

२०. निदर्शनालङ्कारः

निदर्शना द्विधैकत्वारोपो वाक्यपदार्थयोः ।
श्रीजयीन्द्रसपर्या या तज्जन्मतपसः फलम् ॥
तद्वाणीधोरणी धत्ते फणीशानवचः श्रियम् ।
निदर्शनान्या क्रियया सदसद्बोधनं द्विधा ॥

---

१. पा– व्यतिरेकोऽधिकोक्तिः ।     २. पा– वियद्धुनिः ।

बुधान् जयीन्द्रः प्रीणाति स्फोरयन् सत्कलाफलम् ।
हंसालोके कियन्मादृगिति तानत्यजत्तमः ।।

२१. सहोक्त्यलङ्कारः

सहोक्तिः सैव सत्यस्पृग्धर्मः कीर्त्या जयीन्द्र ते ।।

२२. विनोक्त्यलङ्कारः

विनोक्तिः स्याच्चरित्राणि राजन्ते कैतवैर्विना ।।

२३. समासोक्त्यलङ्कारः

समासोक्तिर्वर्ण्यमानेऽन्यस्मिन् वर्ण्यविशेषणैः ।
वाणी वशीकरोत्येतां कीर्तिं पश्य जयीशितुः ।।

२४. परिकरालङ्कारः

२५. परिकरांकुरालङ्कारः

परिक्रिया तदङ्कूरौ साकूतौ धर्मधर्मिणौ ।
सुरेन्द्रसूनोः पुरतः कः स्थाता विजयीन्द्र ते ।।

२६. श्लेषालङ्कारः

नानाविशेष्यसामान्यमर्थश्लेषोऽर्थवर्णनम् ।
जगतः पावनी स्वः स्था गङ्गातिविजयीन्द्रगीः ।।

२७. अप्रस्तुतप्रशंसालङ्कारः

अप्रस्तुतप्रशंसा सा श्रयते प्रस्तुतं यदि ।
श्रीजयीन्द्रः सदा चन्द्रः द्युमणिः किं नु वर्ण्यते ।।

२८. प्रस्तुताङ्कुरालङ्कारः

प्रस्तुताङ्कुर उद्बोधः प्रस्तुतेऽप्रस्तुतस्य चेत् ।
पश्य ताम्यन्ति पद्मानि जयीन्द्र पुरतस्तव ।।

२९. पर्यायोक्तालङ्कारः

पर्यायोक्तं भवेदन्यभंग्या प्रस्तुतवर्णनम् ।
दयारसैरभ्यषिञ्चद्यः सुधीन्द्रमिमं नुमः ।

इष्टसम्पादनं चापि पर्यायोक्तं मिषात् परे ।
नमन्त्येते नृपा वीक्ष्याः कटाक्षैर्विजयीन्द्र ते ॥

३०. व्याजस्तुत्यलङ्कारः

व्याजस्तुतिः स्तुतिर्निन्दा वान्योन्योक्त्या यदा द्विधा ।
चरन्त्येकैव दिक्षु त्वत्कीर्तिः स्तुत्या जयीन्द्र किम् ॥
सैव साधुः परेषां या न बहिर्याति मन्दिरात् ।

३१. विरोधाभासालङ्कारः

विरोधस्तु तदाभासे जयीन्द्रोपाङ्गविक्रमः ॥

३२. व्याजनिन्दालङ्कारः

व्याजनिन्दा भवेन्निन्दा निन्दाया व्यज्यते यदि ।
स्तुवन्ति त्वां जयीन्द्रान्ये विधिर्निंद्यस्तदास्यकृत् ॥

३३. आक्षेपालङ्कारः

आक्षेपः प्रतिषेधे तदाभासाभ्यां द्विधोदितः ।
दृष्टव्यो हीश्वरो यद्वा जयीन्द्रोऽस्ति न हि स्तुतिः ॥
आक्षेपो वाच्यगम्यत्वे यदा विधिनिषेधयोः ।
कुर्याः करोषि चेद्वादं जयीन्द्रे यैः फलं भजेः ॥

३४. विभावनालङ्कारः

विभावना विना हेतुमहेतोरसमग्रतः ।
प्रतिबन्धाद्विरुद्धाच्च कार्याद्धेतुस्ततोऽपि षट् ॥
अप्यलेपा जयीन्द्रस्य कीर्तिर्धवलतां गता ।
कम्बोर्गङ्गाप्रवाहोऽयमुदेति विजयीन्द्र ते ।

वचनैर्नातिकठिनैर्जयीन्द्रो जयतीतरान् ।
भवन्त्यन्याः प्रतिबुधास्तवालोके लसत्यपि ॥
प्रतिवक्तृंस्तापयन्ति कक्षाः शीतलितास्तव ।
जायते विजयीन्द्रास्य चन्द्रात्स्मितपयोम्बुधिः ॥

३५. विशेषोक्त्यलङ्कारः

विशेषोक्तिः पुष्कलेऽपि हेतौ कार्याजनिर्भवेत् ।
नावलेपो जयीन्द्रस्य सति विद्याविजृम्भणे ॥

३६. असम्भवालंकारः

असम्भवो भवेदर्थनिष्पादासम्भवो यदि ।
को वेद कीर्तिराशान्तान् जयीन्द्रस्यावरिष्यति ॥

३७. असङ्गत्यलङ्कारः

असङ्गतिः कार्यहेत्वोर्विरुद्धपृथगाश्रयः ।
सुधा जयीन्द्र ते वाचि बुधतां तेव सज्जने ॥
विरूद्धस्य क्रियैकत्वकार्यस्यान्यत्र च द्विधा ।
अवाचौन्यान् विधित्सु त्वं सवाचः कुरुषे पुरः (परान्) ।
छात्रान्विधित्सुः ससुधान्[१] स्ववाचमकरोस्तथा ॥

३८. विषमालङ्कारः

विषमं तत् त्रिधानिष्टावाप्तिरिष्ट समुद्यमे ।
विरूपकार्यजननं विरूपद्वयसङ्गतिः ॥
जिगीषवोजिताः प्राप्य जयीन्द्रं पाण्डुराननैः ।
स्तुवन्ति कीर्तिमसितां बुधाः क्वैते क्व तज्जयः ॥

३९. समालङ्कारः

समा त्रिधानुरूप्यं चेद् द्वयोर्हेतु सरूपता ।
कार्येऽनिष्टं विना सिद्धिश्चिकीर्षाविषयस्य च ।

---

१. पा– सुवुधान्.

कलानुरूपमास्यं ते सौरेन्द्रे विबुधावनम् ।[१]
श्रीमज्जयीन्द्र तत्प्राप्तिस्थाने तद्धितयार्थिनः ।

४०. विचित्रालङ्कारः

विचित्रमन्यथा यत्नः तद्विरूद्धफलं प्रति ।
ज़यीन्द्रकीर्तिर्धवला श्यामीकर्तुं द्विषन्मुखम् ।।

४१. अधिकालंकारः

अधिकं पृथुलाधाराधेयाभ्यां प्रथिमा तयोः ।
जयीन्द्रकीर्ते नालं ते चतुर्दशजगंत्यपि ।
वाग्ब्रह्मचर्यं ते केन तस्मिन्नेषापि नृत्यति ।

४२. अन्योन्यालंकारः

अन्योन्योऽपि क्रियाऽन्योन्यं वाग्भात्यास्येन तत्तया ।

४३. अल्पालंकारः

अल्पं सूक्ष्मो यदाधारः सूक्ष्मादाधेयतो भवेत् ।
ब्रह्मण्युत्तरमध्यास्ते स्वान्तं सूक्ष्मं जयीन्द्र ते ।।

४४. विशेषालंकारः

विशेषस्तु द्विधा ध्येयमनेकस्थमनाश्रयम् ।
श्रीजयीन्द्रद्विषत्स्वाशा श्वसत्सवितरप्रथा ।।

विशेषः किंचिदारंभे सप्तशक्त्यान्यनिर्मितिः ।
अन्विष्यता श्रीजयीन्द्रमनुनादर्शि शारदा ।।

४५. व्याघातालंकारः

व्याघातस्तु द्विधा तत्कृदन्यथाकृद्यदा भवेत् ।
कार्यहेतुस्तद्विरूद्धकृत्सौकर्यात् समर्थिते ।।

---

१. पा- विबुधाननम् ।

या विद्या मदयंत्येता: जयीन्द्रे विनयावहा: ।
हेतुश्चेन्निग्रहेऽज्ञत्वं जयीन्द्रानुग्रहे ह्यसौ ॥

४६. हेतु(कारण) मालालंकार:

हेतुमाला पूर्वपूर्वमुत्तरोत्तरकारणम् ।
श्रीजयीन्द्रगिरा शास्त्रं शास्त्रेण स्फू: स्फुरा यश: ।

४७. एकावल्यंकार:

एकावल्यर्थनिर्देशो गृहीतत्यागरीतिभाक् ।
जयीन्द्रदृक् श्रुतिव्यापिन्येते हरिकथांचिते ॥

४८. मालादीपकालंकार:

मालादीपकमेकावल्याप्तदीपकमुच्यते ।
वाणीं जयींद्र: [1] श्रयते सा कीर्ति सा दिशो दश ॥

४९. सारालंकार:

सार: स्यात् पूर्वपूर्वस्मादुत्तरोत्कर्षयुग्वच: ।
अच्छा हंसी ततो ज्योत्स्ना तत: कीर्तिर्जयीन्द्र ते ॥

५०. यथासंख्यालंकार:

यथासंख्यं क्रमजुषां क्रमेणैवान्वयो यदि ।
दयते स्मरतोष्टे श्रीजयीन्द्रोऽर्थीशशास्त्रिणाम् ।

५१. पर्यायालंकार:

पर्याय: क्रमतोऽनेकमेकं वाप्यन्यसंश्रयम् ।
मुक्ताजाप्टी: श्रयंत्येतं स हरिं यं पुरा शुक: ।

५२. परिवृत्त्यलंकार:

परिवृत्तिर्मिथो न्यूनाधिकयो: परिवर्तनम् ।
ज्ञानमेकं वितीर्यार्यान् जयींद्रो वशयत्यलम् ।

---

१.पा- श्वयते.

५३. परिसंख्यालंकार:

परिसंख्या भवेदेकं निषिध्यान्यत्र यंत्रणम्।
स्वांते रागो न किं तर्हि शाटीषु विजयींद्र ते ॥

५४. विकल्पालंकार:

विकल्पालंकृतिस्तुल्यबलौ यदि विरोधिनौ।
जयींद्राग्रे गतिर्मौनं स्तुतिर्वा प्रतिवादिनाम्।

५५. समुच्चयालंकार:

समुच्चयो बहूनां चेद् गुंफो युगपदाश्रयः।
विद्या विश्राणनं धर्मो जयींद्रे सन्ति सद्यशः ॥

५६. हेतुकारकदीपकालंकार:

हेतुर्दीपकमेकस्मिन् क्रमिकानेकगुंफनम्।
बुधास्तिष्ठन्त्याक्षिपन्ति स्तुवन्ति त्वां जयीन्द्र ते।

५७. समाध्यलंकार:

समाधिरन्यहेतूत्थकार्यसौकर्यमुच्यते।
यदाहमुपदेशार्थी तदैवायाज्जयीश्वरः।

५८. प्रत्यनीकालंकार:

प्रत्यनीक[१] मनल्पारिसंबंधिनि पराक्रमः।
घनः पिधत्ते जैत्रश्रीजयींद्रसुहृदं विधुम्।

५९. काव्यार्थापत्त्यलङ्कार:

काव्यार्थापत्तिरर्थस्य सिद्धिः कैमुत्यतो यदि।
जितः शेषो जयींद्रेण कियंतोऽन्ये विपश्चितः।

---

१.पा– मजय्यारि.

६०. काव्यलिंगालंकारः

काव्यलिंगं समर्थ्यार्थसमर्थनमुदीर्यते ।
जयीन्द्रो यदयं स्पर्धामद्धा त्यजत पण्डिताः ॥

६१. अर्थान्तरन्यासालंकारः

अर्थान्तरन्यास उक्तः चेत्सामान्यविशेषयुक् ।
जयीन्द्रस्तृणयत्यर्थान् युक्तमेतन्महात्मनाम् ॥

६२. विकस्वरालंकारः

विकस्वरौ विशेषौ चेन्मध्ये सामान्यमंडितौ ।
जयीन्द्रो दुर्जयोऽक्षोभ्या महान्तो हि यथाऽब्धयः ।

६३. प्रौढोक्त्यलंकारः

प्रौढोक्तिः स्यादहेतोश्चेदुत्कर्षं प्रति हेतुता ।
जयीन्द्रजितनीलास्यान् अयशोऽन्धीकरोति तान् ।

६४. संभावनालंकारः

संभावना स्यादित्थं चेदिति तर्कोऽन्यसिद्धये ।
अशेषं यद्यशेषांस्तान् गुणान् ब्रूयाज्जयीन्द्र ते ।

६५. मिथ्याध्यवसित्यलंकारः

मिथ्याध्यवसितिर्मिथ्यासिद्धौ तादृक् प्रकल्पनम् ।
विवदेत जयीन्द्रेण पुरस्कृत्य फणीश्वरम् ।

६६. ललितालंकारः

ललितं प्रकृतार्थस्य प्रतिबिंबानुकीर्तनम् ।
गतापं बंधुमिच्छान्ति जयीन्द्रप्रतिवादिनः ।

६७. प्रहर्षणालंकारः

प्रहर्षणं त्रिधोत्कण्ठितार्थसिद्धिरयत्नतः ।
इष्टाधिकार्यसिद्धिश्च हेतुयत्ने फलागमः ॥

जयींद्रं ध्यायता दिष्ट्या स[१] एवागाद्धि दृश्यताम्।
अनुग्रहो महान् प्राप्ये पथि मूले निधिर्यथा।

६८. विषादनालंकार:

विषादः प्रार्थ्यमानार्थविरुद्धाप्तिर्यदा भवेत्।
[२]जिगीपुभिर्जयींद्राग्रे विजयो हंत लप्स्यते।

६९. उल्लासालंकार:

उल्लासो गुणदोषाभ्यामेकस्यान्यत्र तौ यदि।
इच्छन्ति छात्रतां तज्ज्ञास्तदलाभाद् गतं दिनम्।
निन्दन्ति श्रीजयीन्द्र त्वदसेवा दोषकृन्न किम्।
तत्पलायनमज्ञानां त्वत्समक्षस्थितेर्वरम्।

७०. अवज्ञालंकार:

अवज्ञा गुणदोषाभ्यां गुणदोषौ न चेद् द्विधा।
जयींद्राभ्याशमबुधाः को विदास्त्वेत्व पण्डिताः।

७१. अनुज्ञालंकार:

अनुज्ञा गुणलाभेन दोषस्याभ्यर्थना दया।
इच्छंत्यपजयं तस्माज्जयींद्रच्छात्रताप्तये।

७२. लेशालंकार:

लेशो दोषे गुणत्वं वा गुणे वा दोषता यदि।
विजयींद्रजितास्तज्ज्ञास्त्वज्ञेषु स्वैरचारिषु।

७३. मुद्रालंकार:

मुद्रापदैः प्रस्तुतार्थैः सूच्यार्थो यदि सूच्यते।
वदान्यो विपुलार्थानां नान्योऽस्ति विजयींद्रतः।

---

१. पा– स एवागादिदृक्षताम्
२. पा– जिगीपुभिर्जयीन्द्राग्रेऽप(ज)क्षयो हन्त लभ्यते

७४. रत्नावल्यलंकार:

रत्नावली प्रस्तुतानां क्रमिको न्यास उच्यते ।
विष्णुधर्मप्रचेतश्री पदाश्रीर्विजयींद्रगी: ।

७५. तद्गुणालंकार:

तद्गुण: स्वगुणं त्यक्त्वा यदन्यगुणमाश्रयेत् ।
जयींद्रकीर्त्या रत्नाद्रि: रजताद्रीयते त्विषा ॥

७६. पूर्वरूपालंकार:

पूर्वरूपं पुन: पूर्वगुणप्राप्त्यानुवर्तते ।
जयीन्द्रकीर्त्या यमुनायुगप्यच्छैव जाह्नवी ।
विकृतेर्थे पूर्वदशानुवृत्तिं चापरे विदु: ।
अस्तेऽपीन्दौ जयींद्रस्य कीर्त्या ज्योत्स्नानुवर्तते ।

७७. अतद्गुणालंकार:

अतद्गुणोऽन्यधर्माद्युक् त्वद्यशोऽग्रेऽपि नाशितम् ।

७८. अनुगुणालंकार:

अन्वादिगुण आत्म प्राक् गुणोन्मेषोऽन्य संनिधे: ।
अच्छाप्यभ्रनदी स्वच्छा विजयीन्द्रयश: श्रिया ।

७९. मीलितालंकार:

मीलितं [१] यदि साम्येन भेदो यदि तिरोहित: ।
श्रीजयीन्द्रभवत्कीर्तिज्योत्स्नयोर्न भिदीक्ष्यते ।

८०. सामान्यालंकार:

सामान्यो गुणसामान्याद्विशेषो नावभासते ।
नालक्ष्यैरावणो दिक्षु जयीन्द्राच्छगुणोत्करे ॥

---

१. पा– गुण

८१. उन्मीलितालंकार:

८२. विशेषकालंकारश्च

उन्मीलितविशेषौ द्वौ स्फूर्तौ भेदविशेषयो: ।

जयीन्द्रकीर्तौ विज्ञाता ज्योत्स्नोत्पल विका(ला) सत: ।
ऐरावतोऽप्यवगतो बुधैरिन्द्राधिरोहणात् ।।[१]

८३ उत्तरालंकार:

द्विधोत्तरं तत्र गूढोत्तरं साकूतमुत्तरम् ।
चित्रोत्तरं बहुप्रश्नेष्वेकं प्रश्नोऽपि चोत्तरम् ।।
कीदृक् जयीन्द्रो वर्षाब्दसदृक् कीदृग् रणेऽर्जुन: ।
क: स्तुत्यर्ह: को यतीन्द्रो जयीन्द्रो भुवि कोमल: ।

८४. सूक्ष्मालंकार:

सूक्ष्म चेष्टेंगिताभिज्ञे जयीन्द्राग्रे स्थितं बलै: ।
सूक्ष्मं चेष्टेंगिताभिज्ञेऽन्यस्य साकूतचेष्टितम् ।
वीक्षणे विजयीन्द्रस्य विडूर्लैरगत: स्थितम् ।।

८५. पिहितालंकार:

पिहितं तु परोदंतज्ञस्य साकूतचेष्टितम् ।
निवर्तयत्यशेषेभ्यस्तान् जयीन्द्रस्तीक्ष्णवीक्षणै: ।

८६. व्याजोक्त्यलंकार:

व्याजोक्तिर्हेतुमुक्त्वान्यं यन्निजाकारगोपनम् ।
जयींद्राग्रे बुधा: कंपं गदंति गदहेतुकम् ।

८७. गूढोक्त्यलंकार:

गूढोक्तिरन्योद्देश्या[२] वागन्यं प्रति[३] यदोच्यते ।
द्विजराजं तमेव त्वं भजामृतकृते बुध ।

---

१.पा– इन्द्रवरोहणात्  २.पा– ग्यद.  ३.कथ्यते.

८८. विवृतोक्त्यलंकार:

विवृतोक्तिः श्लेषगूढविवृतिः कविना कृता ।
विजयींद्रं तमेव त्वं भजेत्याह ससूचनम् ।

८९. युक्त्यलंकार:

युक्तिर्मर्म तिरोधातुं क्रियया परवंचनम् ।
ग्रन्थान् लिखंतश्शिष्यास्ते वीक्ष्यान्यान् कान् वितन्वते ।

९०. लोकोक्त्यलंकार:

लोकोक्तिरुच्यते लोकप्रवादोऽनुक्रियेत चेत् ।
जयींद्राग्रे गृहीत्वासून् करे सन्ति द्विषद्बुधाः ।

९१. छेकोक्त्यलंकार:

लोकोक्तिरर्थान्तरयुता छेकोक्तिरिति कथ्यते ।
जयीन्द्र एव जानीते जयीन्द्रचरितं बुधाः ॥

९२. वक्रोक्त्यलंकार:

वक्रोक्तिः श्लेपकाकुभ्यामन्यार्थो यदि कल्प्यते ।
विशारदा जयीन्द्रार्यशिष्या नैते द्विषद्बुधाः ।

९३. स्वभावोक्त्यलंकार:

स्वभावोक्तिर्गुणद्रव्यजात्यादेस्तत्ववर्णनम् ।
व्याख्यात्यस्ताखिलाशंकं जयीन्द्रो दर्शनानि षट् ।

९४. भाविकालंकार:

भाविकं भूतभाव्यार्थसाक्षात्कारोपवर्णनम् ।
जयीन्द्रव्याकृतार्था नो दृशोस्तिष्ठन्ति तत्क्षणे ॥

९५. उदात्तालंकार:

उदात्तमृद्धिर्वोदात्तचरितं वान्यबोधकम् ।
राजन्यराजकोटीरमणिनीराजितो मुनिः ॥

९६. अत्युक्त्यलंकार:

अत्युक्तिस्त्वद्भुतातथ्यौदार्यशौर्यादिवर्णनम्।
जयीन्द्रदानसलिलैः जाताः सप्ताब्धयः क्षणात्।

९७. निरुक्त्यलंकार:

निरुक्तिरन्यथा नाम निरुक्तिः स्तुतिनिन्दयोः।
स्वाज्ञानज्ञानतो दोषज्ञा जयीन्दाग्रतो वुधाः॥

९८. प्रतिषेधालंकार:

९९. विध्यलंकार:

[१]प्रतिषेधो विधिः सिद्ध[२]तादृगर्थानुवादतः।
नैयान्येषां जयीन्द्रस्य सभा ब्रूत विचार्य तत्।
राजास्थान्यां जयीन्द्रोऽयं विजयी भवति ध्रुवम्॥

१००. हेत्वलंकार:

हेतुस्तत्तद्वतोरैक्यं सहोक्तिर्वा तयोर्भवेत्।
विजयीन्द्रकृपादृष्टिः स्वर्णवृष्टिर्मनीषिणाम्॥

इत्युक्तमखिलग्रन्थानालोक्यालंक्रिया शतम्।
रसवत्प्रेयसी शेषौ (दोषो) रसभावौ परस्य चेत्।
जयीन्द्रो भात्यनंगोऽयं जयी जित जगत् त्रयः।
स्मरन् स्मरारिमाश्चर्याद्यं वीस्याहमविस्मयः।

व्या— अत्र वर्ण्यगोचररतिभावस्य स्मरारिगोचररतिरंगम्।

ऊर्जस्व्यंगं रसाभासो भावोंऽगं चेत् समाहितम्।
संतु कांताहतस्वांता यतीन्द्रास्त्वां परं नुमः।

---

१.पा– प्रतिपेधविधी। २. पा– तादृगर्थाभिघानतः।

सक्रु(धो) द्धोऽपि जयीन्द्र[१] त्वां वीक्ष्यैव विनता[२] बुधाः ।
अंगान्यन्वर्थकाभावाः भावस्योदयसंधयः ॥

इत्यलंकारमंजर्यामर्थालंकारपेटिका ।
सुधीन्द्रयतिनाऽकारि विद्वद्राजसुतोषिणी ॥

इति श्रीमत्सर्वतन्त्रस्वतन्त्र षड्दर्शनाचार्यवर्य सकलकलाप्रवीण श्रीमद्विजयीन्द्रतीर्थपूज्यपादशिष्येण कविगर्वभीमशिखामणिना कविकुलतिलकेन श्रीमत्सुधीन्द्रतीर्थयतीन्द्रेण विराचिता अलंकारमंजरी समाप्ता ।

अलंकारसुमंजर्याः लेखनेन हृदब्जगः ।
श्रीमन्मध्वमुनीन्द्राणां वरदो वरदोऽस्तु मे ॥
शरणं भवभीतानां शरणं भजतां सताम् ।
रमणं कमलादेव्याः शरणं यामि शार्ङ्गिणम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

१. यतीन्द्र.   २. विजिता.